स चिन्त्यते । न ह्यस्य विद्याधर्मत्वं विद्याभेदकं । उक्तन्यायेनान्यत्रापि तदुपसंहारस्य वक्तुं शक्यत्वात् । न चानुपसंहारार्थमेवातद्धर्मत्वं बोध्यत इति वाच्यं । उपक्रमोपसंहाराभ्यां विद्यैकत्वनिर्णयस्यैव दृश्यमानत्वादुपेक्ष्यइव भाति । ननु तदुक्तिर्यथा तथास्तु अतद्धर्मत्वबोधनस्यानुपसंहारार्थकत्वे कानुपपत्तिरिति चेत् । उच्यते । सूत्रस्य तदुक्तार्थत्वे हि तत्तात्पर्य्यकल्पना सएव च न साधीयान् । तथाहि । स्वाध्यायोऽध्येतव्य इत्यादिषु स्वाध्यायशब्दस्य वेदवाचकत्वं प्रसिद्धं समाचारशब्दस्य विहितक्रियावाचकत्वञ्च । तत्रोभयोरपि मुख्योऽर्थो बाध्यते । तस्मिन् सम्भवति तद्बाधस्त्वयुक्तः ।

किञ्चैवं सत्यग्निष्टोममेवोद्दिश्येत्यादिनोक्ताशङ्काया अनिवृत्तिरिति । नन्वथर्वणोपनिषत्सु पठ्यते स होवाचाब्जयोनिः योऽवताराणां मध्ये श्रेष्ठोऽवतारः को भविता येन लोकास्तुष्टा देवास्तुष्टा भवन्ति यं स्मृत्वा मुक्ता अस्मात् संसाराद्भवन्ति कथञ्चास्यावतारस्य ब्रह्मता भवति । स होवाच तं‌ह नारायणो देव इत्युपक्रम्य मथुरास्वरूपं निरूप्य निगद्यते यत्रासौ संस्थितः कृष्णः स्त्रीभिः शक्त्या समाहित इति तेनास्यावतारस्याशेषावताराणां मध्ये श्रैष्ठ्यं निरूप्यते । श्रीभागवतेऽपि च एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयमिति गीयते । पूर्व्वोक्तरीत्या तु सर्व्वतुल्यता प्रतीयत इति नैकतरनिर्द्धारः सम्भवति । किञ्च ब्रह्मणो निरवयवत्वेनैकस्यांशित्वमन्येषां तदंशत्वमित्यपि वक्तुमशक्यमिति प्राप्तेऽभिधीयते । सत्वं यस्य प्रिया मूर्त्तिः विशुद्धसत्वं तव धाम शान्तमित्यादिवाक्यैरप्राकृतो भगवत्स्थानभूतः सत्वनामा भगवद्धर्म्मरूपएव कश्चनास्ति यादृशेन रूपेण भगवान्

कार्य्यं कर्त्तुमिच्छति तादृग्रूपत्वं प्रकटीकृत्य तस्मिन् स्वयमाविर्भूयायःपिण्डे वह्निवत् तत्तत्कार्य्याणि करोति यस्मिन् यस्मिन्नवतारे स सोऽंश इत्युच्यते तत्र हि विग्रहस्तत्राविर्भूतं ब्रह्मस्वरूपञ्च प्रतीयते। विग्रहस्य सत्वात्मकत्वेन धर्म्मरूपत्वात् तत्राविर्भूतस्यैव ब्रह्मतत्समुदितस्यावतारत्वेन गणनात् तत्रैकस्यैवांशस्य तद्रूपत्वं यत् तदेवांशत्वं। यत्राधिष्ठानमनपेक्ष्य स्वयमेव शुद्धं साकारं ब्रह्माविर्भवति भक्तार्थं स स्वयं पूर्णो भगवानुच्यते। एतदेव च श्रैष्ठ्यमतएव सर्व्वतः पाणिपादान्तत्वं स्वस्मिन् स्फुटं ज्ञापयितुं तोकादिभावेनाविर्बभूव। तेन यादृग्यादृग्लीलाविशिष्टं यद्यद्बाल्यपौगण्डाद्यवस्थाविशिष्टं तत्तद्रूपं नित्यमेवेति वयं जानीमः। न चैवं सच्चिदानन्दविग्रहोक्तिः सर्व्वत्र विरुद्धा भवेदिति वाच्यं। सत्वस्यापि भगवद्धर्म्मत्वेन सच्चिदानन्दरूपत्वादविरोधात्। मत्स्याद्यधिष्ठातृरूपाणि तु विभूतिरूपाणि। एतच्च यथातथा भक्तिहंसे प्रपञ्चितं। तत्त्वञ्च प्रकाशाश्रयवद्वा तेजस्त्वादिति न्यायेन भगवद्धर्म्माणामपि सच्चिदानन्दरूपत्वात् हीनाधिकारिणामप्युपासकानां फलप्रेप्सूनां तत्तत्फलदानार्थमैश्वर्य्यादिरूपेण तत्र तत्र स्थितत्वमेव। नन्वेकस्यैव शुद्धस्यैवानन्तरूपत्वं भवतैवोक्तमतो मत्स्यादिरूपेष्वपि नाधिष्ठानत्वेन सत्वं वक्तुं शक्यं। किञ्चैवं निराकारस्वभावत्वं ब्रह्मणः सिध्यतीति सत्वाद्यनभिहितप्राकट्योक्तिरप्यनुपपन्नेति चेत्। मैवं। सत्वाधिष्ठानत्वस्य प्रमाणसिद्धत्वेनानपनोद्यत्वात्। तच्चोक्तं यदेकमव्यक्तमित्यादि*। प्राकट्यं हि भक्तिनिमित्तकं सा तु बहुविधेति तदनु-

---

* यदेकमव्यक्तमनन्तरूपमिति ख।

रूपं प्राकट्यमपि तथा *। सर्गादिकार्य्येष्वधिकृतानां भक्ताना-मितरासक्तिरप्यस्तीत्युपाध्यन्तरितस्नेहवत्त्वात्तानन्तरूपत्वेन मत्-स्यादिरूपोऽपि तदर्थं तदवधानेन प्रकटीभवति। ये तु भग-वत्स्वरूपमात्रासक्तास्तदर्थं स्वयमेवातदवधानेन प्रादुर्भवति। एतेनैव निराकारत्वशङ्कापि † निरस्ता। एतेन सोपधिस्नेहवदर्थमेव मत्स्यादिरूपप्राकट्यस्य प्रमाणसिद्धत्वान्निरुपधितदर्थमेव श्री-व्रजनाथप्राकट्यस्यापि तथात्वात् सोपाधिस्नेहवत्स्वपि पुरुषार्थ-दानस्यानुषङ्गिकत्वात् पुरुषविध इति श्रुतेश्चैतदेवरूपं रसो वैस इत्यादिश्रुतिप्रतिपाद्यं निरूपधिस्नेहवतां विषय इदमेव च श्रेष्ठं मत्स्यादिरूपन्तु सोपधि तद्वतामेव तथा तादृक्तद्वतामर्थे एव प्राकट्यादित्यवसीयते। एवं सति गुणभेदस्याप्रयोजकत्वात् सर्व्ववेदान्तप्रत्ययत्वं ब्रह्मणो निष्प्रत्यूहं।

## दर्शयति च ॥ ४ ॥

वेदैकत्वेन विद्यानामेकत्वं श्रुतिर्दर्शयति सर्व्वे वेदा यत्-पदमामनन्तीत्यादिना। उपासनाप्रकारभेदेनोपास्यभेददर्शने दोषञ्च दर्शयति यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवतीति। उदित्यव्ययमप्यर्थकं। तथाचारमल्पमप्य-न्तरं कुरुत इत्यर्थः।

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

ननु पूर्व्वसूत्रोक्तरीत्या गुणोपसंहारो न क्वचिदपि प्राप्ताव-सर इति सिद्धं। दृश्यते चोपसंहारः श्रीरामोपनिषत्सु योवै ये

---

* न तथेति खं।

† निराकारत्वाशङ्का इति खं।

मत्स्यकूर्म्माद्यवतारा इत्यादिनोक्तावतारूपत्वस्य श्रीरामि नमस्ते रघुवर्य्याय रावणान्तकराय चेत्यादिषु तद्दतियुष्मच्छब्द-विषये श्रीव्रजनाथे रघुवर्य्यत्वादेरित्याशङ्क्य तत्प्रयोजकं रूपमाह। उपसंहार इत्यादिना। उक्तस्थलादिषु च उपसंहारः * सत्वर्थस्य पदार्थस्य भगवल्लक्षणस्यो† भयत्राप्यभेदादित्यर्थः। नन्वेवं सति मत्स्ये शरचापादिकं पुरुषे‡ शृङ्गादिकं भावनीयं स्यादिति चेत्। तत्राह। विधिशेषवदिति। यथा विधिशेषाणामग्निहोत्रादी-नामग्निहोत्रत्वादिलक्षणे धर्म्मे समानेऽपि सति स्वस्वशाखोक्त-प्रकारकस्यैव करणं नान्यशाखोक्तधर्म्मोपसंहार एवमि-हापि तत्तदवतारोपासकस्य तत्तदसाधारणधर्म्मवत्त्वेनैवोपासनं नान्यावतारधर्म्मवत्त्वेनापीत्यर्थः। यद्वा मत्वर्थीयोवत्प्रत्ययोऽत्र। तथाच विधिशेषोऽर्थवादस्तद्वत् समानश्च भवति यत्तत्र चोप-संहार इत्यर्थः। अत्रैवं ज्ञेयं। एकस्यां श्रुतौ यस्य कर्म्मणो यत् फलमुच्यते तदितरस्यां तस्यैव कर्म्मणस्तदितरत् फलमुच्यते। एवं सति द्वितीयश्रुत्युक्तफलकामनयापि तदेव कर्म्म कर्त्तव्यं भवतीति तत्फलसाधकत्वस्योपसंहारः। यथा यद्वैश्वदेवेन यजते प्रजाएव तद्यजमानः सृजत इत्येका श्रुतिरस्य यागस्य प्रजा-फलकत्वमाह। यद्वैश्वदेवेन यजते। अग्निमेव तत्संवत्सरमाप्नोति तस्माद्वैश्वदेवेन यजमानः। संवत्सरीणाᳪ स्वस्तिमाशास्त इत्याशासीतेति द्वितीया श्रुतिराह तत्रोक्तरीतिरिति। यत्तु

* उक्तस्थलादिषु उपसंहार इति खं।

† भावलक्षणस्येति खं।

‡ पुरुषे च इति खं।

विधिविशेषाणामग्निहोत्रादिधर्म्माणां तदेवैकमग्निहोत्रादिकर्म्म सर्व्वत्रेत्यर्थाभेदादुपसंहार इति तन्न साधु। अग्निहोत्रादेस्तत्तच्छाखिनां स्वस्वशाखोक्तप्रकारस्यैव करणादतिरेके प्रायश्चित्तश्रवणान्नान्यशाखोक्तधर्मोपसंहारः शक्यवचनः। प्राणाद्युपासनास्वधिकगुणस्येतरत्रोपसंहारे न किञ्चिद्बाधकं दृश्यत इति तत्र स कर्त्तुं शक्यत इति चकारेण तदादयः संगृह्यन्ते। वस्तुतस्तु पूर्व्वसमुच्चयार्थश्चकारः। शाखान्तरोक्तधर्म्मोपसंहारप्रयोजनाभावस्य स्वाध्यायस्य तथात्वेनेत्यत्र निरूपितत्वात्। उपसंहारवीजमनेन सूत्रेणोक्तं।

## अन्यथात्वं शब्दादिति चेन्नाविशेषात्॥ ६॥

ननु उपासनासूक्तन्यायेन गुणोपसंहारो ह्युपास्यानां ब्रह्मत्वेनैक्ये सति भवति। मिथोविरुद्धानां गुणानां शान्तत्वक्रूरत्वतपोभोगादीनामुपसंहारे क्रियमाणे स्वरूपाणामन्यथात्वं अब्रह्मत्वं स्यादित्यर्थः। तत्र हेतुः शब्दादिति। एकत्वैकरसत्वादिधर्म्मनिरूपकश्रुतेरित्यर्थः। समाधत्ते नाविशेषादिति। एकरसत्वं यथा श्रुतिवलान्निर्णीयते तथा विरुद्धधर्म्मवत्त्वमपि तत एव तथेत्यर्थः। तेन वस्त्वेव तत् तादृक्त्वव्यमिति भावः।

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत्॥ ७॥

पूर्व्वसूत्रोक्ताशङ्कानिराकरणं वा विकल्पेन पूर्व्वोक्तात् प्रकारान्तरेण कर्त्तव्य इत्याह। न वेति। तमेवाह। प्रकरणभेदादिति। अत्रायं भावः। श्रुतिप्रामाण्याद्यावत् तदुक्तधर्म्मवत् ब्रह्मेति मन्तव्यं। एवं सति यादृशोऽधिकारिणो यादृग्वेद्यं

रूपं तादृशस्य तस्य तादृक् तन्निरूपयति प्रकरणभेदेन। तथाच ज्ञानप्रकरणे ज्ञानाधिकारिणो यादृग्रूपं ज्ञेयं तादृक्तत् तस्मै निरूपयति अदृश्यमग्राह्यमित्यादिरूपा श्रुतिः। भक्तिप्रकरणे तु भक्तेर्बहुविधत्वात् यादृग्यादृग्भक्तानां यादृक् यादृक् तदनुभवविषय*स्तादृक्तादृक्तन्निरूपयत्यथर्व्वणोपनिषदिति। अत्र दृष्टान्तमाह। परोवरीयस्त्वादिवदिति। अस्मिन्मे लोकेऽर्द्धुकऌ्‌-स्यादिति कामवत आराधाऽवान्तरदीक्षा पूर्व्वमुक्ता। तदग्रे परो-वरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन्मे लोकेऽर्द्धुकऌ्‌-स्यादिति चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्य-वान्तरदीक्षेति पठितं। अस्य दीक्षाप्रकरणे पठितत्वाद्दीक्षां विनोक्तरीत्या व्रते तु न परोवरीयस्त्वमेवं भक्तिप्रकरणीयानाम-थर्व्वणोपनिषदाद्युक्तरूपाणां न भक्तिरहितोपास्यत्वं। ज्ञान-साधनत्वेन विष्णुस्मरणादावपि क्रियमाणे भक्तित्वं नेति। अथवा पूर्व्वसूत्रेण सर्व्वरूपेषु मिथः सर्व्वधर्म्माणामुपसंहारः प्राप्तः। स चै-कान्तिभक्तानुभवविरुद्ध इत्यत्र व्यवस्थितविकल्पमाह न वेत्या-दिना। सर्व्वेष्ववतारेषु भगवदवतारत्वेन साधारणी भक्तिर्यस्य स सर्व्वत्रोपसंहारं करोतु नाम यस्त्वेकान्ती तस्य स्नेहोत्कर्षेणान्तः-करणमेकस्मिन्नेव रूपे पर्य्यवसितमिति रूपान्तरमन्तःकरणारूढं न भवत्येवेति नोपसंहारसम्भावनापीति। तदेतदुच्यते न वेत्य-नेन। तत्र हेतुः प्रकरणभेदादिति। श्रुत्यादिषु तत्तदधि-कारिणमुद्दिश्य तत्तत्प्रकरणमुक्तं तेनात्र प्रकरणपदेनाधिकार उच्यते। एवं सत्युपासकादिभ्य उक्तरीत्योत्कृष्टाधिकारादित्यर्थः

* यादृगनुभवविषय इति ख'।

सम्पद्यते । परोवरीयस्त्वादिवदिति । परस्मात्परश्च वराच्च वरीयानिति परोवरीयानुद्गीथः । तथा चाक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोपासनाया अप्युद्गीथोपासनत्वेन साम्येऽपि सर्वोत्कृष्टत्वेनाचोद्गीथोभासत इति न हिरण्यश्मश्रुत्वादिगुणोपसंहारः परोवरीयस्त्वगुणविशिष्टोद्गीथोपासनायामेवं प्रकृतेऽपीति ।

## संज्ञातश्चेत् तदुक्तमस्ति तु तदपि ॥ ८ ॥

एकान्त्यनैकान्तिनोरपि श्रीरामोपासकत्वादिसंज्ञा त्वविशिष्टेत्येकान्तिनोऽप्युपसंहारो युक्त इत्याशङ्क्योत्तरन्तु न वा प्रकरणभेदादित्यनेनैवोक्तं । संज्ञा तु लौकिक्यधिकारस्त्वान्तरः सएव वलीयानिति । संज्ञैकत्वस्य हेतोरन्वयव्यभिचारमाह अस्ति तु तदपीति । प्रमिति * भेदेष्वप्युपासनेषु परोवरीयस्त्वादिषु सञ्ज्ञैकत्वमुद्गीथोपासनेऽप्यस्तीत्यर्थः ।

## व्याप्तेश्च समञ्जसम् ॥ ९ ॥

अथेदं विचार्य्यते । उपास्येषु रूपेषु वाल्यपौगण्डादिकमप्युच्यते । तथा सति विग्रहे न्यूनाधिकभाव आपततीति तचोक्तं सच्चिदानन्दत्वमनुपपन्नं स्यात् तेषां सदैकरूपत्वात् प्राकृतत्वे च सर्व्वमसमञ्जसं स्यादिति प्राप्त आह व्याप्तेरिति । सर्व्वतः पाणिपादं तदित्यादिश्रुतेः साकारमेव व्यापकमिति । चकारात् सर्व्वरस इति श्रुत्या रसात्मकत्वेन भक्तानां यादृग्रूपेण लीलारसानुभवस्तादृग्रूपं क्रमेण योगमायापसारणेन प्रकटी-

* प्रमितेरिति खं ।

करोतीति बाल्यादिभावोपपत्तेः सर्व्वमुपपन्नमित्यर्थः । तेन यावदुक्तधर्म्मवद् ब्रह्मेति सिद्धं । ननु ब्रह्मधर्म्मवत्त्वेन * ते सर्व्वे नित्या वाच्यास्ते च तत्तद्भक्तविशिष्टास्तत्र चैकस्यैव भक्तस्य पौर्व्वापर्य्येणानेकलीलासम्बन्धित्वं श्रूयते । तथाच पूर्व्वलीलाया नित्यत्वेन तत्सम्बन्धिभक्तस्यापि तथात्वं वाच्यं । एवं सति तस्यैवाग्रिमलीलासम्बन्धोऽशक्यवचनः । तथा वचने तु पूर्व्वलीलाया नित्यत्वं † भज्येत । नित्यत्वे त्वग्रिमलीलासम्बन्धिनो भिन्नत्वं ‡ स्यात् तच्चानुभवे तद्दावेदकमानविरुद्धमित्यत उत्तरं पठति ।

सर्व्वाभेदादन्यत्रेमे ॥ १० ॥

लीलामध्यपातिनां सर्व्वेषां पदार्थानां ब्रह्मणा सहाभेदाद्ब्रह्मणश्चैकत्वात् पूर्व्वलीलातोऽन्यत्रोत्तरलीलायामपीमे पूर्व्वलीलासम्बन्धिन एव त इत्यर्थः । अत्रेदमाकूतं । रसो वै स इति श्रुत्या § सर्व्वरस ॥ इति श्रुत्या च सर्व्वरसात्मकत्वं ब्रह्मणो निर्णीतं । तथाच यस्य रसस्य ये विभावानुभावादिरूपास्तैः स रसः सम्पद्यत आतानवितानात्मकतन्तुभिः पट इवातस्तत्तादात्म्यं रसस्येति सर्व्वाभेदो निःप्रत्यूह इति । ननु विरुद्धदिक्कयोरेकजातीयभाववतोर्भक्तयतिशयेन युगपदेकजातीयलीलासहितभगवत्प्रादुर्भावे भगवतो व्यापकत्वेनैवं प्रादुर्भावस्योप-

---

* ब्रह्मधर्म्मत्वेनेति खं ।

† नित्यत्वे इति खं ।

‡ सम्बन्धिभिन्नत्वमिति खं ।

§ श्रुत्याचेति खं ।

|| खपुस्तके सर्व्वरस इति श्रुतिर्न परिगृहीता ।

पन्नत्वेऽपि लीलापदार्थानामव्यापकत्वात् युगपदाविर्भावोऽनुपपन्नः * । भक्तयोः समानत्वाद्भक्तिमार्गविरोधापाताद्विनिगमकाभावाच्चैकत्र मायया प्रदर्शयतीति च वक्तुं युक्तमिति शङ्काघेताभ्यां सूत्राभ्यां निरस्तेति ज्ञेयं । ब्रह्मणो व्यापकत्वाल्लीलायास्र तेन सहाभेदात् तथात्वादेकस्मै भक्ताय यथा ब्रह्मणा सह लीलापदार्था आविर्भवन्ति तथैव तदैवान्यत्रापि भक्तसमानदेश आविर्भवन्तीति सर्व्वसामञ्जस्यात् । ननु व्यापकत्ववत् पूर्णानन्दैश्वर्य्यवीर्य्यादयोऽपि धर्म्मास्तेषु प्रतीता भवेयुः न चैवमस्ति दुःखसम्भावनायां प्रभुमित्र प्रार्थयन्ति यतः । एवं सति व्यापकत्वमपि न वक्तुं शक्यं तुल्यत्वादत उत्तरं पठति ।

आनन्दादयः प्रधानस्य ॥ ११ ॥

पूर्णानन्दैश्वर्य्यादयः प्रधानस्य धर्म्मिणो ब्रह्मणएव धर्म्माः लीलापदार्थास्तु ब्रह्मधर्म्मत्वेन व्यापका उच्यन्ते । व्यापकस्य धर्म्मिणोऽनागन्तुकधर्म्मस्य व्यापकत्वनियमात् न हि धर्म्मेषु पूर्णानन्दत्वादयः सम्भवन्ति । धर्म्मित्वापत्त्याधर्म्मव्याहतेः † । अतएवात्र प्रधानपदमुपात्तं गुणभावेन लीलापदार्थानामाविर्भाव इति ज्ञापयितुं ।

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥

ननूपासकस्य प्रियत्वादिप्रकारकज्ञानक्रममादाय प्रियत्वादिधर्माणां शिरस्त्वादिरूपत्वमानन्दमयाधिकरणे निरूपितमिति

* आविर्भावानुपपत्तेरिति ख' ।

† व्यपहतेरिति ख' ।

लीलास्थानामपि प्रियत्वादिज्ञानस्य सत्त्वात्तत्रापि स्वरूपोपासकस्य प्रियशिरस्त्वादिधर्माणामुपसंहारः कार्य्य इत्याशङ्का परिहरति प्रियशिरस्त्वाद्यप्राप्तिरिति । चित्तशुद्धितारतम्यहेतुकप्रियत्वादिज्ञानं लीलास्थानां चित्तशुद्धा*पेक्षाभावान्न सम्भवतीति न तेषामत्रोपसंहारः कार्य्य इत्यर्थः । अथवा नन्वानन्दमयोपासनामथर्वणोपनिषदुक्तपञ्चरात्राद्यागमोक्तप्रकारेण कुर्व्वतः पुरुषरूपे पक्षाद्युपसंहारस्यायुक्तत्वादानन्दमयाधिकरणे तद्रूपस्यैवोक्तत्वात् पुरुषरूपः कथमानन्दमयः । तथात्वे वा कथं नोक्तोपसंहारः । अपरञ्च । मोदप्रमोदयोरुपचितानुपचितानन्दरूपयोर्युगपत्त्वेन देशभेदेनापि भिन्नत्वां†न्नित्यानन्दैकरसे ब्रह्मणि तादृग्रूपकथनमनुपपन्नमित्याशङ्क्य परिहरति । प्रियशिरस्त्वादीति । यद्यथर्व्वणोपास्यात् प्रियशिरस्त्वादिविशिष्टस्य भेदः स्यात् तदा तदप्राप्तिः ‡ स्यान्न च तथेति प्रियशिरस्त्वादिकमुपासनामार्गीयस्याप्यथर्वणिकादेरुपसंहार्य्यमेवेत्यर्थः । चित्तशुद्धितारतम्यहेतुकं प्रियत्वादिज्ञानमिति पक्षे परोक्षवादपक्षेऽपि तत्र भेदाभावान्मोदप्रमोदयोर्न त्वदुक्तरूपत्वमित्यर्थः । ब्रह्मधर्म्माएव भिन्ना इत्युपासनार्थं तानादाय शिरःपाण्यादि निरूप्यत इति तत्रैव निरूपितमस्माभिः । यद्यप्यानन्दमयाधिकरणएवास्यार्थस्योक्तत्वान्नेयं शङ्का सम्भवति तथापि गुणोपसंहारप्रसङ्गे § मिथ्यावादिन आपाततः शङ्का सम्भवतीत्याचार्य्य-

* चित्तशुद्ध्यपेक्षाभावादिति ख' ।

† देशभेदेनाभिन्नत्वादिति ख' ।

‡ तदा तदप्राप्तिः स्यादिति ख-पुस्तके नास्ति ।

§ प्रसङ्गः इति ख' ।

णोक्ता निरस्ता। ननूपास्यरूपस्याविरुद्धाएव गुणा उपसंहर्त्तव्या न तु विरुद्धाः। तथाच पुरुषरूपे पक्षादि विरुद्धमिति न तदुपसंहार्य्यमित्याशङ्काह।

इतरे त्वर्थसामान्यात् ॥ १३ ॥

इतरे, पुरुषरूपे विरुद्धत्वेन ये भासमाना धर्म्मास्तेऽप्युपसंहर्त्तव्याः। तत्र विरोधव्यवच्छेदज्ञापनाय तु शब्दः। तत्र हेतुरर्थसामान्यादिति। अर्थः पदार्थः आनन्दमयत्वलक्षणस्तस्य समानत्वादेकत्वादित्यर्थः। अथानन्दमयाधिकरण उक्तप्रकारेण ये प्रियत्वादिधर्म्मास्तेषामेवोपसंहारः कार्य्यः न तु पुरुषरूपे पक्षादीनामपीत्यग्रिमं पठति।

आध्यानाय प्रयोजनाभावात् ॥ १४ ॥

आनन्दस्वरूपस्य यावन्तो धर्म्मा भक्तिमार्गीयाः परोक्षवादेनोच्यन्ते प्रियत्वप्राधान्यादयस्तेषां सर्व्वेषां ध्यानमासमन्ताद्ध्यानं तदर्थं ये धर्माः * प्रयुक्ताः† स्तएवोपसंहर्त्तव्या नान्ये। तत्र हेतुः प्रयोजनाभावादिति। ध्यानपदार्थस्य तावद्भिरेव सिद्धेरधिकोपसंहारे तथात्वादित्यर्थः। अन्येषामनुपसंहारे हेत्वन्तरमप्याह।

आत्मशब्दाच्च ॥ १५ ॥

प्रियमेवेत्यादिना परोक्षवादेनोक्तानां प्रियप्राधान्यादीनामेव भावना कार्य्या न तु यथाश्रुतानां शिरःपक्षादीनां। तेषामविवक्षितत्वात्। तत्र हेतुरात्मशब्दादिति। आनन्द आत्मे-

---

* तदर्थं च धर्म्माः इति ख।

† उपयुक्ताः इति ख।

त्यनेन पूर्व्वोक्तानां प्रियप्राधान्यादीनां रसात्मकानामात्मा स्वरूपमानन्द इत्युक्तं। अग्रे रसो वै स इति वक्ष्यमाणत्वात् तस्य च स्थायिभावात्मकत्वात् तस्यैवानन्दमयत्वाच्च प्रियविषयक-लीलामध्यपातिभक्तज्ञानप्रकाराणामपि रसात्मकत्वेनानन्दरूप-त्वात् तेषामुपासना तूत्तमाधिकाराभावात् शिरःपक्षादिरूपेण कार्य्येति भाववती श्रुतिस्तथा न्यरूपयत्। एतेन यत्परम्परा-सम्बन्धेऽप्युपास्यत्वं तदस्य महत्त्वं* कियदवधिवाच्यमिति ज्ञाप्यते। एवं सत्युपासनामार्गीयोपास्यं विभूतिरूपं न तु मूल-रूपं यत्र योगेन वाक्यादिति ज्ञेयं।

आत्मगृहीतिरितरवदुत्तरात्॥ १६॥

तैत्तिरीयकेऽन्नमयादिनिरूपणे पुरुषविधत्वं तेषां निरूप्य तस्यैष एव शारीर आत्मा† यः पूर्व्वस्येति सर्व्वत्र निगद्यते। तत्रानन्दमयपर्य्यन्तं शारीरात्मत्वकथनाद्भवति संशयः। शरीराभि-मानी जीवएव कश्चिदुत ब्रह्मैव। तत्र शारीरपदात् जीवएव भवितुमर्हति। तथा सत्यानन्दमयस्यापि ब्रह्मत्वं नोपपद्यते। उच्यते च भार्गव्यां विद्यायां अन्नं ब्रह्मेति व्यजानादित्यारभ्या-नन्दमयपर्य्यन्तमानन्दो ब्रह्मेति व्यजानादित्यन्तया श्रुत्या ब्रह्म-त्वमित्युभयतः पाशारज्जुरिति प्राप्त आह। इतरवत् जीववत् आत्मगृहीतिः आत्मग्रहणं। तस्यैष एव शारीर आत्मेति यत्तदुत्त-रात्। यः पूर्व्वस्येति सर्व्वत्रोक्तत्वात् सर्व्वेभ्य उत्तर आनन्द-मयस्तस्माद्धेतोरित्यर्थः। अन्नमयादिषु सर्व्वेष्वानन्दमयस्यैवोक्त-

* उपास्यमहत्त्वमिति ख।

† पुरुषएव शारीर आत्मा इति ख।

तत्तच्छरीराभिमानित्वात् तथा। एतद्यथातथानन्दमयाधिकरणे * प्रपञ्चितमस्माभिः। अथ वाऽन्योऽन्तर आत्मेत्यन्नमयादन्यत्र सर्व्वत्रोक्तत्वात् पूर्व्वपूर्व्वनिरूपितो यः स इतर इत्युच्यते। तथाच यः पूर्व्वस्येति श्रुत्येतरवत् पूर्व्वनिरूपितवत् प्रकृतस्याप्यात्मग्रहणं कथनं यत्तदुत्तरादिति।

## अन्वयादिति चेत्स्यादवधारणात् ॥ १७ ॥

ननु सर्व्वत्रान्योऽन्तर आत्मेति श्रुत्या प्रत्येकमन्नमयादीनां भेदनिरूपणाच्छारीरपदाच्च भिन्नो भिन्नो जीव † आत्मा शरीराभिमानी सर्व्वत्रोच्यते। आनन्दमयेऽपि तथोक्तिर्या सा आनन्दमयस्य ब्रह्मत्वेन व्यापकत्वेन ‡ सर्व्वत्रान्वयात् सर्व्वेषु शरीरेषु सम्बन्धादित्याशङ्क्य तन्निरासायोक्तेऽर्थे उपपत्तिमाह। स्यादित्यादिना। स्यात्। आनन्द एवोक्तसर्व्वशरीराभिमानी भवतीत्यर्थः। तत्र हेतुरवधारणादिति। एष एवेत्येवकारेणेतरनिषेधपूर्व्वकमानन्दमयस्यैवात्मत्वनिर्द्धारादित्यर्थः।

## कार्य्याख्यानादपूर्व्वं ॥ १८ ॥

तैत्तिरीयके पठ्यते। तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्युपक्रम्य महाभूतसृष्टिमुक्त्वा आम्नायते पृथिव्या ओषधय ओषधीभ्योऽन्नं अन्नात् पुरुषः स वा एष पुरुषोऽन्नरसमय इति। एतदग्रेऽन्नस्योत्पत्तिस्थितिलयहेतुत्वमुक्त्वा येऽन्नं ब्रह्मोपासत इत्युच्यते। भृगुवरुणसंवादे चान्नं ब्रह्मेति व्यजानादित्युच्यते। तत्र स वा

---

* एतत् यथानन्दमयाधिकरणे इति ख ।

† शारीरपदाच्च भिन्नो जीव इति ख ।

‡ व्यापकत्वेनेति खपुस्तके नास्ति ।

एष पुरुषोऽन्नरसमय इत्यनेन पूर्व्वोक्तएव पुरुष उच्यत उत तद्भिन्न इति भवति संशयः। किमत्र युक्तं पूर्व्वोक्त एवेति। यतः पूर्व्वोक्तस्यैव स वा एष इत्यनेन प्रत्यभिज्ञानं प्रतीयते तत्र ब्रह्मत्वेनोपासना कार्य्येत्यभिप्रायेण ब्रह्मत्वेन स्तूयत इति प्राप्त आह। कार्य्याख्यानादपूर्व्वमिति। पूर्व्वस्थानकार्य्यस्य पुरुषस्याख्यानात् स वा एष इत्यनेनाग्निमश्रुतिभिर्ब्रह्मत्वेन प्रतिपिपादयिषितमन्नरूपमेवोच्यते न तु पूर्व्वमित्यर्थः। स वा एष इति प्रत्यभिज्ञानमिति यदुक्तं तन्न। अन्नात् पुरुष इत्यन्तेनाधिभौतिकतन्निरूपणात् स वा एष इत्यनेनाध्यात्मिकतन्निरूपणादुभयोश्च भेदात्। अतएव संशयाभावायाह। वै निश्चयेन। एष वक्ष्यमाणः पुरुषः सः। आध्यात्मिकत्वेन प्रसिद्धोऽन्नरसमय इति। अन्यथा ब्रह्मात्मकतपोलक्षणसाधनेनाधिकारे सम्पन्नेऽन्नं ब्रह्मेति व्यजानादिति न वदेत्। न चैतदपि तत् तथात्वेन स्तूयत इति वाच्यं। श्रुतेः प्रतारकत्वापत्तेः। आनन्दमयान्तमेवमेव निरूपणाच्च। अतएवास्याप्यात्माऽग्रे निरूपितो यः पूर्व्वस्येति सत्वाधिदैविक आनन्दमयः। अथवा वाजसनेयिशाखायामात्मेत्येवोपासीतेत्युपक्रम्य तदेतत् प्रेयः पुत्रात् प्रेयोवित्तात् प्रेयोऽन्यस्मात् सर्व्वस्मादन्तरतरं यदयमात्मेत्येतदग्रेऽन्यस्य प्रियत्वं निराकृत्येश्वरो हि तथा स्यादात्मानमेव प्रियमुपासीतेति पठ्यते। अत्रात्मौपाधिकत्वात् सर्व्वत्र प्रियत्व आत्मपदेन जीवात्मनएव प्रियत्वेनोपासना विधीयत उतेश्वरपदात् परमात्मन इति भवति संशयः। किमत्र युक्तं जीवात्मनएवेति। अतः * यथा पुत्रादेरात्मौपाधिकप्रिय-

---

* कुतः इति ख।

त्वोक्त्या जीवात्मनएव प्रियत्वमुच्यतेऽन्यत्र श्रुतौ तथेहापि प्रेयः पुत्रादित्यादिकथनाज्जीवात्मैव भवितुमर्हतीति प्राप्त आह। कार्य्याख्यानादपूर्व्वमिति। इतः पूर्व्वमाम्नायते प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानोमनस्तान्यस्यैतानि कर्म्मनामान्येवेति। तथाच प्राणनवदनादिकार्य्यैः कृत्स्नप्राणवागादित्वेनैकस्यैवात्मन आख्यानात् कथनादपूर्व्वं। पूर्व्वं पुत्रवित्ताद्यभिमानदशायां न वा अरे पत्युः कामाय पतिः प्रियो भवतीत्यादिना यत्प्रियत्वेनोच्यते तस्माद्भिन्नमात्मशब्दवाच्यमत्रेत्यर्थः। लोके हि प्राणवायुवागिन्द्रियादीनामेव तत्तच्छब्दवाच्यता न तु जीवस्य अत एवाग्रे श्रुतिराह ईश्वरो हि तथा स्यादिति। अत एव प्रेयोऽन्यस्मात् सर्व्वस्मादन्तरतरं यदयमात्मेत्याह। अन्तरो जीवात्मा ततोऽप्यतिशयेनान्तरमन्तरतरं पुरुषोत्तमस्वरूपमेव भवितुमर्हतीति एतेन विग्रहस्यैवात्मरूपत्वं सिध्यति। तेनाविक्कतत्वपरमानन्दत्वादयोऽपि धर्म्मा उपसंहर्त्तव्याः। ननु विग्रहे चक्षुःश्रोत्रादीनां वैलक्षण्यप्रतीतेरात्मनश्चैकरसत्वादुक्तकर्म्मनामवत्त्वं ब्रह्मण्यनुपपन्नमित्याशङ्क्योत्तरं पठति।

## समान एवं चाभेदात् ॥ १९ ॥

चोऽप्यर्थे। तथाचैवमपि सति श्रोत्रचक्षुरादिवैलक्षण्यप्रतीतावपि सति समान एकरूपएव न तु विषमस्तत्र हेतुरभेदादिति। चक्षुरादीनां ब्रह्मत्वेन परस्परमभेदादित्यर्थः। अत्रेदमाकूतं। तन्त्वौपनिषदं पुरुषं पृच्छामीति श्रुतेरूपनिषद्वेद्यमेव ब्रह्मस्वरूपं। ताश्च प्राणन्नेव प्राणो भवति वदन्वागित्यादिरूपाः

प्रतिनियतेन्द्रियग्राह्यानर्थान् स्वरूपेणैव गृह्णद्ब्रह्म तत्तच्छब्दवाच्यं भवतीति वदन्ति। तद्वाच्यता च व्यवहार्य्यत्वे। स च तदैतत् प्रेयः पुत्रादिवाक्यैकवाक्यतया निरुपधिस्नेहवत्तामेव व्यवहार्य्य इति ज्ञाप्यते। स चाविर्भूतेऽवताररूपएव सम्भवति। एवं सति तत्र भक्तैर्भगवद्विग्रहे तत्तदवयवेषु भेदेन यथायथा व्यवह्रियते तथातथैव तदेकमेवाखण्डसच्चिदानन्दरूपं ब्रह्मेत्यर्थः सम्पद्यते। एवम्बिधो लोके न प्रसिद्ध इत्यसम्भावना स्यात् तदभावायाग्रे श्रुतिराह ईश्वरो हि तथा स्यादिति। एतेनाविर्भूतरूपे व्यापकत्वैकरसत्वसच्चिदानन्दत्वादयो धर्म्मा उपसंहर्त्तव्या अनाविर्भूतेऽपीति स्थितं। एवं सत्याविर्भावेऽनाविर्भावेऽपीश्वरः समानः। न ह्याविर्भावे कांश्चनागन्तुकान्धर्म्मानादायाविर्भवतीति वक्तुं शक्यं अनाविर्भूतस्यापि एवं आविर्भूतप्रकारेणैवाभेदादित्यपि सूत्रार्थः सूत्रकाराभिमत इति ज्ञातव्यं। चकारेण विरुद्धसर्व्वधर्म्माश्रयत्वं समुच्चीयते। एवं साक्षादाविर्भूतभगवद्रूपे पूर्णानन्तधर्म्मास्तदुपासकेनोपसंहर्त्तव्या इति सिद्धं।

अथ यत्र कार्य्यचिकीर्षया जीवे स्वयमाविशति तदावेशात्तद्धर्म्मा अपि केचित् तस्मिन्नाविर्भवन्ति तत्रोपासकेनाखिलब्रह्मधर्म्मोपसंहारः कर्त्तव्यो न वेति शङ्कासमाधानं विकल्पेनाह सूत्राभ्यां। तत्रादौ विधिपक्षमाह।

### सम्बन्धादेवमन्यत्रापि ॥ २० ॥

अन्यत्रापि जीवेऽप्येवं ब्रह्मणीवोपासना कार्य्या। तत्र हेतुः सम्बन्धादिति। अयोगोलके वह्नेरिव तस्मिन्नावेशलक्षणः सम्बन्धोऽस्तीति तत्त्वेन व्यपदेशाच्च तथेत्यर्थः। अत्रैवं ज्ञेयं। अयन्तु

जीवोऽत्राविष्टं भगवत्त्वमहमुपासइति जानाति चेत्तदा न सा जीवगामिन्युपासना किन्तु ब्रह्मगामिन्येव। तत्राखिलधर्म्मोपसंहारे न किञ्चिद्बाधकं। यत्र ब्रह्मत्वेनैव ज्ञात्वोपास्ते तत्रापि तं यथा यथोपासते तथैव भवति। तद्धैतान् भूत्वावतीति श्रुतेर्गुर्वादौ जीवत्वबुद्धि* निषेधाच्च तथा। तत्तदुपासकस्य † तदुपासनासिद्ध्यर्थं तत्फलदानार्थञ्च तादृग्रूपो भगवानाविशतीति च तथा। यस्त्वन्तरङ्गभगवद्भक्तं हृद्याविर्भूतभगवत्कं ज्ञात्वैतद्भजनेनाहं भगवन्तं प्राप्स्यामीति ज्ञात्वा तमेव भजते स भक्तिमार्गीय इति भक्तहृद्याविर्भूतेऽपि रूप उपसंहारो धर्म्माणां तेन न कार्य्य इत्यग्रिमं पठति।

## न वाविशेषात्॥ २१ ॥

अनुपसंहारे हेतुरविशेषादिति। अस्य भक्तभक्तत्वेन तद्भजनरसास्वादनेन विस्मृततदाविष्टभगवत्कत्वेन तन्निरपेक्षत्वेन वा तदाविष्टभगवति गुणोपसंहारेऽनुपसंहारे वा भक्तोपासनाया विशेषाभावादित्यर्थः। अनुपसंहारस्यात्र वाधकत्वाभावज्ञापनाय वा शब्दः। विशेषादिति वा। पूर्व्वं विहितत्वेन भगवदाकारादिषु भजनं कुर्व्वन्नयुक्तरूपभक्तसङ्गेन तद्भजनेन च पूर्व्वस्माद्विशिष्टं रसमनुभूतवानिति रसास्वादे विशेषाद्गुणोपसंहारं स न करोतीत्यनुवादः। विहितत्वेन गुणोपसंहारपूर्व्वकोपासनायां नीरसत्वेन अनादरज्ञापनाय वा शब्दः। भगवदवताररूपोऽपि वादरायणः प्रासङ्गिकेऽपि भक्तिमार्गस्मरणे तदीय

---

* जीवबुद्धिनिषेधादिति खं।

† तत्र यादृगुपासक इति खं।

रसाविष्टपरवशस्तद्भावस्वभावमनूक्तवान्। अपि च। उपसंहारो* हि तत्रानुक्तानामन्यत्रोक्तानां गुणानां तत्र सत्त्वेन ज्ञानमात्रं। उक्तरूपभक्तरूपं भक्ताय तु तद्भजनीये भक्तएवालौकिकाननुभावान् भगवान् प्रत्यक्षं दर्शयतीति न तत्रोपसंहारापेक्षागन्धोऽपीत्युत्तरं पठति।

## दर्शयति च ॥ २२ ॥

ननु भक्तभक्तः स्वसेव्येत्यलौकिकं वीर्यं दृष्ट्वा तदाविष्टे भगवति तत्सम्भारकत्वस्येन्द्रादीनामपि तदाज्ञापेक्षित्वं दृष्ट्वा द्युलोकव्यापकत्वस्योपसंहारं करिष्यतीत्याशङ्क्याह।

## सम्भृतिद्युव्याप्त्यपि चातः ॥ २३ ॥

राणायनीयानां खिलेषु पठ्यते। ब्रह्मज्येष्ठा वीर्य्या सम्भृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान। ब्रह्म भूतानां प्रथमन्तु जज्ञे तेनार्हति ब्रह्मणा स्पर्द्धितुं क इति। अस्यार्थस्तु अन्यैर्हि पुरुषैः सहायानपेक्ष्य विक्रमाः सम्भ्रियन्ते तेन तत्पराक्रमाणान्तएव नियतपूर्व्वभावित्वरूपकारणत्वेन ज्येष्ठाः ब्रह्मधर्म्माणान्तु ब्रह्मैव ज्येष्ठमनन्यापेक्षं सृष्ट्यादि करोतीत्यर्थः। एवं सति ब्रह्मज्येष्ठं येषां तानि ब्रह्मज्येष्ठानि वीर्य्याणि। अत्र छन्दसि बहुवचनस्यड़ादेशः। किञ्च। अन्येषां वीर्य्याणां बलवद्भिर्मथे भङ्गोऽपि भवति तेन ते स्ववीर्य्याणि न सम्बिभ्रति ब्रह्मवीर्य्याणि तु ब्रह्मणा सम्भृतानि निःप्रत्यूहं सम्भृतानीत्यर्थः। तच्च ज्येष्ठं

---

* सं उपसंहारीहीति ख।

ब्रह्माग्रे इन्द्रादिजननः प्रागेव दिवं स्वर्गमाततान व्याप्त-वन्नित्यमेव विश्वव्यापकमित्यर्थः। देशतोऽपरिच्छेदमुक्त्वा काल-तोऽपि तमाह। ब्रह्मेति। भूतानामाकाशादीनां पूर्व्वमेव जज्ञे आविर्बभूवेत्यर्थः। एतेन वीर्य्यसम्भृतिद्युव्याप्तिप्रभृतिमाहात्म्यमुक्तं भवति। तथाच सम्भृतिश्च द्युव्याप्तिश्च तयोः समाहारस्तथा। एतावपि स तत्र नोपसंहरति। तत्र हेतुर्नवाविशेषादिति सूत्रोक्त एवेत्यतिदिशत्यत एवेति। एतद्यथा तथा तत्रैवोक्तं। विषयवाक्योत्तरार्द्धोक्तधर्म्मानुद्देशेनैवं ज्ञायते भक्तस्यैहिकपार-लौकिकोपयोगिधर्म्मोपलक्षणार्थं द्वयोरेवोद्देशः कृत इति। चका-रेण दर्शनमप्युक्तं समुच्चीयते। अन्यच्च। स्वशक्तिसम्भावनायां हि तद्योग्यतानिषेधः सम्भवति सा चाविर्भूतएव भगवति सम्भवतीत्यखिलशक्त्याविर्भावपूर्व्वकमाविर्भूतस्य तस्यैतया श्रुत्या माहात्म्यमुच्यत इति गम्यते। एवं सति एतद्वाक्योक्तधर्म्मयोरे-वानुपसंहार्य्यत्वेन यत् कथनं तत्तु भक्तहृद्याविर्भूतं ब्रह्माप्येवं-भूतमेवेति ज्ञापनाय अतो युक्तएवानुपसंहारः।

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥

तैत्तिरीयके सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलं पुरुषएवेदं सर्व्वं यद्भूतं यच्च भव्यमित्यादिना पुरुषविद्या निरूप्यते। तत्रैव ब्रह्मविदा-प्नोति परमिति प्रश्ने स वा एष पुरुषोऽन्नरसमय इत्यारभ्य प्राणमयमनोमयविज्ञानमयानन्दमयात्मकं ब्रह्मस्वरूपं निरू-प्यते। तत्र सर्व्वत्र स च पुरुषविधएवेति च पठ्यते। अन्ना-न्नमयादिषु पुरुषसूक्ते च पुरुषपदश्रवणादन्नमयादिषु सहस्र-

शीर्षवत्त्वाद्युपसंहारः कर्त्तव्यो न वेति भवति संशयः। किमत्र युक्तं। उपसंहर्त्तव्यमेवेति। कुतः। सर्वत्र ब्रह्मणएवोपास्यत्वादन्नाद्युपासनोक्तेर्ब्रह्मत्वपुरुषत्वयोरविशेषाद्विद्यैक्यादिति प्राप्त उच्यते। पुरुषविद्यायामिवेति। अन्नमयादिषु सहस्रशीर्षवत्त्वादिकं नोपसंहर्त्तव्यं। कुतः। पुरुषविद्यायां यथा पुरुषस्वरूपं निरूप्यते न तथेतरेषामन्नमयादीनां विज्ञानमयान्तानां स्वरूपं प्रकरणे* निरूप्यते। अत्र हि पुरुषत्वमुच्यते। सहस्रपदमनेकत्वोपलक्षकं अन्यथाक्ष्णां शिरोभ्योद्वैगुण्यं वदेत्तेन साकारव्यापकत्वमुक्तं भवति। तत्र पुरुषविधत्वं स चाध्यात्मिकरूपस्तच्छरीराभिमान्यात्मा चान्य आधिदैविक उच्यते न तथात्र।

किञ्च। पुरुषएवेदꣳ सर्वमित्यादिना प्रपञ्चात्मकत्वं मुक्तिदातृत्वञ्चोक्त्वा नैतावन्मात्रमस्य माहात्म्यमितोऽपि महन्माहात्म्यमस्तीति वक्तुं प्रपञ्चरूपं तद्विभूतिरूपमित्येतावानस्य महिमेत्यनेनोक्त्वा तत आधिक्यमाह अतो ज्यायाꣳश्च पूरुष इति। एवमतिवैलक्षण्यात् पुरुषपदमात्रसाधर्म्येण नैकविद्यत्वं वक्तुं शक्यं न वोपसंहार इति। चकारादभस्य पारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयानित्यादि श्रुतयः सर्वतः पाणिपादन्तदित्यादि स्मृतयश्च संगृह्यन्ते। एतेन यत्किञ्चिद्धर्मसाम्येऽपि † न मूलभूतब्रह्मरूपमत एव न तत्रोपास्यता तथात्वेनेति ज्ञापितं। अत एव भृगूपाख्याने अन्नमयादिब्रह्मज्ञानेऽपि जिज्ञासैवोक्ता भृगोरानन्दरूपपरब्रह्मज्ञाने तु नोक्ता।

---

* तत्प्रकरणे इति खं।

† धर्म्मसाम्यः इति खं।

तेनाशेषगुणपूर्णं ब्रह्मेत्युक्तं भवत्यत उत्तमाधिकारिभिस्तदेवो-पासनीयं न विभूतिरूपमिति ज्ञापितं।

अथ निर्दोषत्वं ज्ञात्वा भजनीयमिति ज्ञापयितुमधिकरणान्तरमारभते।

## वेधाद्यर्थभेदात्॥ २५॥

वाजसनेयिशाखायां द्वयाह प्राजापत्या * इत्युपक्रम्य तेषां मिथःस्पर्द्धामुक्त्वोच्यते ते ह देवानूचुर्हन्तासुरान् यज्ञ उद्गीथेनात्ययामेति ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुद्गायद्यो वाचि भोगस्तं देवेभ्य आगायत् † यत् कल्याणं वदति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मना विध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव पाप्मेति ‡। एवमेव प्राणचक्षुःश्रोत्रप्रभृतिषु पापवेधमुक्त्वोच्यते अथैतमासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उद्गायत्ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मना विध्यत् स यथाश्मानमृत्वा लोष्ठो विध्वंसेतैवꣳह वै विध्वंसमाना विष्वञ्चो विनेशुरिति। छान्दोग्येऽपि प्राणादिष्वेवमेव पाप्मवेधमुक्त्वाऽसन्येन तथेत्युच्यते। एतावान् परं विशेषो वाजसनेयिनाङ्गानकर्तृत्वं सामगानामुद्गीथत्वेनोपास्यत्वमुच्यते वाक्प्राणादीनामिति। अत्र देहसम्बन्धित्वगानकर्तृत्वयोरुपास्यत्वस्य चाविशेषेऽपि वागादिषु पाप्मवेध आसन्यप्राणे कुतो नेति भवति

* प्रजापत्या इति ख।

† अगात् इति ख।

‡ सएव स पाप्मेति ख।

जिज्ञासा। न चासन्योपासनाया विधेयत्वात् तत्स्तुत्यर्थमन्येषु पाप्मवेध उच्यतेऽस्मिन्नेति वाच्यं। न हि प्रयोजनायासन्त-मप्यर्थं बोधयति श्रुतिरिति वक्तुं शक्यं प्रमाणत्वव्याहतिप्रस-ङ्गात्। एकत्र प्रतारकत्वे सर्व्वत्रापि तच्छङ्कया तदुक्ते कोऽपि न प्रवर्त्तेतापि। साक्षात्क्रियार्थत्वाभावेऽपि नासन्निरूपकत्व-मर्थवादानां। वस्तुतस्तु यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्य्यवत्तरं भवतीति श्रुतेः।

ज्ञात्वा ज्ञात्वा च कर्माणि जनोऽयमनुतिष्ठति।
विदुषः कर्म्मसिद्धिः स्यात् तथा नाविदुषो भवेत्॥

इत्यादिवाक्यैर्य एवं वेदेति वाक्यैश्चार्थवादोक्तस्वरूपं ज्ञात्वा कर्म्मकरणे पूर्णं फलमन्यथा न इत्यर्थवादानां फलोपकार्य्यङ्गनि-रूपकत्वान्नानर्थक्यमत उक्तार्थे हेतुं न पश्याम इति प्राप्ते तमि-वाह वेधादीति। वाक्प्राणादिषु यः पाप्मवेध आदिपदात् दुष्टविषयसम्बन्धश्च तत्र हेतुरर्थभेदः। अर्थो भगवान् तस्माद्भेदा-दित्यर्थः। आसन्यस्तु य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतेति छान्दोग्ये उपास्यत्वेनोक्तः। सर्व्ववेदान्तप्रत्ययमिति न्यायात् वेदान्ते-षूपास्यं ब्रह्मातिरिक्तं नोच्यत इत्यासन्योऽपि ब्रह्माभिन्नोऽत एवापहतपाप्मा ह्येष इति सामगैः पठ्यते। अतस्तत्र न पाप्म-वेध इति भावः। ब्रह्मणः स्वतन्त्रपुरुषार्थत्वज्ञापनायार्थपदे-नोक्तिः। एतेन विभूतिरूपेऽपि यत्रैवं तत्र मूलभूतब्रह्मणि निर्द्दो-षत्वे * किं वाच्यमिति ज्ञापितं। अथवाऽर्थः प्रयोजनं विषय इति यावत्। तद्भेदादित्यर्थः।

---

* निर्द्दोषत्वमिति ख ।

अत्रेदमाकूतं। देवा हि स्वस्यासुरजयाय गानार्थं वागादीनूचुस्त्वं न उद्गायेति। गानानन्तरं यो वाचि भोगस्तं* देवेभ्य आगायदित्युच्यते। एवमेव प्राणादिष्वपि स्वस्वभोगं देवेभ्य आगायदिति। एवं सति देवार्थमेवैतद्गानं न तु भगवदर्थं। यद्यप्यासन्ये ऽप्येवमुच्यते तेभ्य एष प्राण उदगायदिति तथापि यथा वागादिषु स्वनिष्ठभोगं देवेभ्य आगायदित्युक्तं तथा नासन्ये। तेनोक्तमानैर्ब्रह्मात्मकत्वेनासुरजयहेतुर्भगवत्सम्बन्ध एवेति ज्ञात्वा तथैवागायदासन्य इति ज्ञायते। अतएवान्यत्र वेध उक्तो ऽत्र तत्करणेच्छायामप्यासुराणां नाश उक्तः। अग्रे च भवत्यात्मना परास्य द्विषन्† भ्रातृव्यो भवति यएवं वेदेति पठ्यते। तेन परब्रह्म निर्दोषमिति किमु वाच्यं। यत्र तद्विभूतिरूपासन्यस्योक्तरूपतां यो वेत्ति सोऽपि गुणयुक्तो दोषरहितश्च भवतीति कैमुतिकन्यायः सूचितो भवति। एतेन लोके दोषत्वेन ये धर्म्माः प्रतीयन्ते तएव धर्म्मा भगवति निरूप्यमाणा‡ न दोषत्वेन ज्ञेयाः किन्तु गुणत्वेनैव वस्तुत एव तथात्वादिति भावो ज्ञाप्यते।

एवं भगवत्सम्बन्धाभावे दोषसम्बन्धमुक्त्वा तथा सति गुणहानिञ्च वदंस्तत्र विशेषमाह।

## हानौ तूपायनशब्दशेषत्वात् कुशाच्छन्दस्तुत्युपगानवत्तदुक्तं ॥ २६ ॥

तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति

* भोगस्ते देवेभ्य इति खं।

† परात्मद्विषन् इति खं।

‡ निरूप्यमाणा दोषत्वेन इति खं।

तदनन्तरं साम्यमुपैति इत्याथर्वणिकैः पठ्यते। परमपदेन ब्रह्मो-
च्यते। तथा च सकार्य्याविद्यारहितः परममुपैति तदनन्तरं
साम्यमुपैतीति योजना। तच्चेदं विचार्य्यते। साम्यं हि समान-
जातीयधर्म्मवत्त्वं *। तच्च कतिपयधर्म्मैरशेषतन्निष्ठधर्म्मैर्वा भवति।
तत्रान्त्यः पक्षो ब्रह्मणा समं न सम्भवति न तत्समश्चाभ्यधिकश्च दृश्यत
इति श्रुतिविरोधादत आद्य एव पक्षोऽनुसर्त्तव्यः। तत्र कैर्धर्म्मैः
साम्यमिहोच्यत इत्याकाङ्क्षायामाह। हानाविति। ब्रह्मणः
सकाशाद्विभागो जीवस्य हानिशब्देनोच्यते। तथा च तस्यां
सत्यां ये धर्म्मा जीवनिष्ठा आनन्दांशैश्वर्य्यादयो भगवदिच्छया
तिरोहितास्ते ब्रह्मसम्बन्धे सति पुनराविर्भूता इति तैरेव तथे-
त्यर्थः। भगवदानन्दादीनां † पूर्णत्वाज्जीवानन्दादीनामल्पत्वात्
नात्रैव समैर्धर्म्मैः ‡ कृत्वा ब्रह्मसाम्यं जीव उपचर्य्यते साम्य-
मुपैतीति। वस्तुतस्तु नैतैरपि धर्म्मैः साम्यमिति भावः। अतएव
न तत्सम इति श्रुतिरविरुद्धा। अतएव सूत्रकृता साम्यमुपै-
तीति साम्योपायनशब्दमात्रं न तु साम्यपदार्थः स्वारसिकोऽस्ती-
तीति भावप्रकटनाय शब्दशब्द उक्तः। ननु तैरेव धर्म्मैः साम्यं
नेतरैरित्यत्र को हेतुरित्याकाङ्क्षायामाह। उपायनशब्दशेषत्वा-
दिति। परममुपैतीति य उपायनशब्दस्तच्छेषत्वात् साम्योपाय-
नस्येत्यर्थः। ब्रह्मसम्बन्धहेतुकत्वादानन्दांशाद्याविर्भावस्य तदैव
साम्योपायनकथनात्तैरेव धर्म्मैः साम्यमभिप्रेतमिति भावः।
नन्वानन्दादीनां ब्रह्मधर्म्मत्वात् तैस्तत्साम्यकथनं तदभेदमेव

* धर्म्मत्वमिति ख।

† भागवदानन्दादीनामिति ख।

‡ समः धर्म्मः इति ख।

गमयतीत्याशङ्का तद्धर्म्मवत्त्वमात्रस्य न तदभेदसाधकत्वमित्यत्र दृष्टान्तमाह। कुशेत्यादि। कुशा औदुम्बर्य्यः समिधस्ता अग्निष्टोमादियागेषु प्रस्तोत्रा स्थाप्यन्ते*। तदा तत्सम्बन्धि यच्छन्दः स्तुत्युपगानन्तद्वदित्यर्थः। तत्राभित्वा शूर†नोनुमो दुग्धा इव धेनव इत्यृचि ये वर्णास्तेषामच एवोपसंहृत्य भकारेणैव‡ गानं क्रियते। न हि तदार्चिकवर्णधर्म्माणामचामुपसंहारोऽस्तीति तद्रूपात्मकत्वं भकारस्य§ सम्भवति। एवं प्रकृतेऽपि ब्रह्मधर्म्मप्राकट्येन|| न तदात्मकत्वं जीवस्य सम्भवति। ननु तत्त्वमस्यादिवाक्यैरत्राभेदबोधनादस्तु तथेति चेत् तत्राह। तदुक्तमिति। जीवब्रह्माभेदबोधनतात्पर्य्यमुक्तमित्यर्थः। तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदितिसूत्रेणेति शेषः।

अपिच। श्रुतौ ब्रह्मोपायनस्य¶ साम्योपायनहेतुत्वोक्त्या तदनुपायनस्य साम्यानुपायने हेतुत्वमिति ज्ञाप्यते। तथाच पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्य्ययाविति सूत्रे जीवस्य ब्रह्मांशत्वेनानन्दैश्वर्य्यादिब्रह्मधर्म्मवत्त्वात् ब्रह्मणः सकाशाद्विभागे सति तदिच्छया तद्धर्म्मतिरोधानस्य संसारित्वे** हेतुत्वमुक्तं यत्तदपि तदुक्तमित्यनेन स्मार्य्यत इति न विस्म-

---

* स्थाप्यते इति खं।

† पूर इति खं।

‡ मकारेणैवेति खं।

§ मकारस्येति खं।

|| ब्रह्मधर्म्माप्राकट्येन इति खं।

¶ ब्रह्मोपासनस्येति खं

** संसारित्वहेतुत्वमिति खं।

त्तव्यं। यथान्यशाखोक्तधर्म्मा अप्येकस्यां विद्यायामुपसंक्रियन्त एवं ब्रह्मनिष्ठा धर्म्मा जीवेऽप्येतया श्रुत्या बोध्यन्त इत्येतावत् साम्यमस्तीत्युपसंहारप्रकरण एतस्य निरूपणं कृतं।

साम्पराये तर्त्तव्याभावात् तथा ह्यन्ये॥ २७॥

वाजसनेयिशाखायां स एष नेति नेतीत्यात्मेत्युपक्रम्य न व्यथत इत्यन्तेन ब्रह्मस्वरूपमुक्ता यत एतादृग्ब्रह्मातस्तद्विदपि विवक्षितरूप इत्यभिप्रायेणाग्रे पठ्यते * अतः पापमकरवमतः कल्याणमकरवमित्युभे उभे ह्येष एते तरत्यमृत इत्यादिनाग्रिमयैष नित्यो महिमा ब्राह्मणस्येत्यृचा च ब्रह्मविदो माहात्म्यमुक्ता पठ्यते तस्मादेवंवित् शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वा आत्मन्येवात्मानं पश्येत् सर्व्वमेनं पश्यति सर्व्वोऽस्यात्मा भवति सर्व्वस्यात्मा भवति सर्व्वं पाप्मानन्तरति नैनं पाप्मा तरतीत्याद्युक्ता अन्ते पठ्यते य एवं वेदेति। अत्र हि पाप्मतरणादिरूपं ब्रह्मज्ञानमाहात्म्यमुच्यते ज्ञानस्य संसारमुक्तिहेतुत्वात्। अथर्वणोपनिषदादिषु तु भगवद्भक्तेर्मुक्तिहेतुत्वमुच्यते। परं ब्रह्मेतद्योधारयतीतुरपक्रम्य भजति योऽमृतो † भवतीति। अग्रेऽपि मुक्तो भवति संसृतेरिति। एतद्विषयव्यवस्था तु पुरैवोक्तेति नात्रोच्यते। एतावान् परं सन्देहो य एवं वेद स पाप्मानन्तरतीति वचनात् ज्ञानदशायामपि पापसत्त्वं वाच्यमन्यथा तरणासम्भवापत्तेः। एवं सति भक्तिदशायामप्येवमेव न वेति भवति संशयः। तत्र श्रुतावविशेषेण पापनाशश्रवणात् मुक्तिपूर्व्वकाले पाप-

---

* इत्यभिप्रायेण पठ्यते इति ख।

† सोऽमृत इति ख।

नाशावश्यम्भावादेकत्र निर्णीतः शास्त्रार्थोऽपरत्रापि तथैति न्यायेन भक्त्या पापनाशादत्रापि तथैवेति प्राप्त आह । सम्पराय इत्यादि । सम्परायः परलोकस्तस्मिन् प्राप्तव्ये सतीत्यर्थः । अथवा परः पुरुषोत्तमस्तस्यायो ज्ञानं । तथाच सम्यगभूतं पुरुषोत्तमज्ञानं येन स सम्परायो भक्तिमार्ग इति यावत् । अथवा परे पुरुषोत्तमे अयनं अयोगमनं प्रवेश इति यावत् । तथाच सम्यक् परायो येन स तथा भक्तिमार्ग इत्यर्थः । ज्ञानमार्गेऽक्षरप्राप्त्या भक्तिमार्गे पुरुषोत्तमप्राप्त्या तस्माद्विशेषमत्र ज्ञापयितुमेवं कथनमतो भक्तिः पूर्व्वमेव पापनाशे युक्त इति भावः । ब्रह्मभूतस्य भक्तिलाभानन्तरं भक्त्या मामभिजानातीति भगवद्वाक्यात् पुरुषोत्तमस्वरूपज्ञानस्य भक्त्यैकसाध्यत्वात् तथा । एवं सति

मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥

मुक्तोपसृप्यव्यपदेशात् ।

जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥
जन्मान्तरसहस्रेषु समाराध्य वृषध्वजं ।
वैष्णवत्वं लभेत् कश्चित् सर्व्वपापक्षयादिह ॥

इत्यादिवाक्यैः पापनाशानन्तरमेव भक्तिसम्भवाद्भक्तस्य तर्त्तव्यपापादेरभावात्* ज्ञानमार्गीयतुल्यतेत्यर्थः । ननु य एवं वेदेति सामान्यवचनात् पुरुषोत्तमविदोऽप्येवमेवेति चेत् तत्राह ।

* अभावत्वादिति खं ।

तथाह्यन्ये। तथा ज्ञानानन्तरमपि पापवन्तोऽन्ये * भक्तिमार्गीयेभ्योऽन्य इत्यर्थः। उक्तवचनरूपोपपत्तिर्हिशब्देन ज्ञाप्यते। ननु भक्तिमार्गीयाणामपि गोपस्त्रीणां

दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः।

ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः॥

इति वचनेन दुष्कृतसुकृतयोरपि हानिश्रवणात् पूर्व्वोक्तवचनैर्विरोध इत्याशङ्कायामुत्तरं पठति।

## छन्दत उभयाविरोधात्॥ २८॥

छन्द इच्छा। तथाच भक्तिमार्गीयाणामपि पूर्व्वं पापनाशो यः स भगवदिच्छाविशेषतोऽतो † भक्तेः पूर्व्वमेव पापनाशनिरूपकातन्नाशनिरूपकवचनयोरविरोधाद्धेतोर्भक्तेः ‡ पूर्व्वमेव पापनाश आवश्यक इत्यर्थः। एवं सति भक्तेः पूर्व्वमेव तन्नाश औत्सर्गिकः स क्वचिद्विशेषेच्छयापनोद्यत इति भावो ज्ञापितो भवति। अत्रेच्छाविशेषे वक्तव्यबहुत्वेऽपि § किञ्चिदुच्यते ‖। चिकीर्षितलीलामध्यपातिभक्ता न सोपधिस्नेहवत्यो न सगुणविग्रहा न वा सुकृतादियुक्ता इति ज्ञापयितुं कतिपयगोपीस्तद्विपरीतधर्म्मयुक्ताः कृत्वा तस्यां दशायां स्वप्राप्तौ प्रतिबन्धं ¶ कार-

---

* पापवतोऽन्ये इति ख'।

† अत इति खपुस्तके नास्ति।

‡ भक्ताः इति ख'।

§ वक्तव्ये बहुत्वेऽपि इति ख'।

‖ किञ्चिदिति खपुस्तके नास्ति।

¶ प्रतिबन्धे इति ख'।

यित्वा स्वयमेव तां दशां नाशयित्वा स्वलीलामध्यपातिनीः कृतवानिति। न ह्येतावता सार्व्वदिकएवायं भावो भवति। न हि मन्त्रप्रतिबद्धशक्तिरग्निरदाहक इति तत्स्वभावत्वमेव * तस्य सार्व्वदिकमिति वक्तुं शक्यं। एतच्च श्रीभागवतदशमस्कन्धविवृतौ प्रपञ्चितमस्माभिः।

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

ननु सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन्निति। तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनायेत्यादिश्रुतिभिरुक्तरूपब्रह्मज्ञाने सत्येव मोक्ष इत्युच्यते। यमेवैष वृणुते तेन लभ्य इति श्रुत्या आत्मीयत्वेनाङ्गीकारात्मकवरणस्य भक्तिमार्गीयत्वात् तस्मिन् सति भक्तिमार्गे प्रवेशाद्भक्त्यैव स इत्युच्यते। किञ्च। भक्त्या मामभिजानातीत्युक्त्वा ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति भगवतोक्तमिति भक्तिमार्गेऽपि पुरुषोत्तमज्ञानेनैव मोक्ष उच्यते। ज्ञानमार्गे त्वक्षरज्ञानेनेति विशेषः।

तस्मात् मद्भक्तियुक्तस्य योगिनो वै मदात्मनः।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह।

इति वचनेन भक्तिमार्गीयस्य ज्ञाननैरपेक्ष्यमप्युच्यते †। तथा चैवं मिथः श्रुत्योश्च ‡ विरोधान्नैकतरनिर्धारः सम्भवति। न च ज्ञानेनैव मोक्ष उभयत्रापि तथोक्तेः। ज्ञाननैरपेक्ष्योक्तिस्तु भक्तिस्तुत्य-

* तत्स्वभाव इति खं।
† वैरपेक्ष्यं इति खं।
‡ श्रुत्योः स्मृत्योश्चेति खं।

भिप्रायेति वाच्यं। विषयभेदेन ज्ञानभेदान्मुक्तिसाधनं कतमज्-ज्ञानमित्यनिश्चयात्। न च श्रौतत्वाविशेषात् समुच्चय इति वाच्यं। ज्ञानिनोऽक्षरे भक्तस्य पुरुषोत्तमे लयात् समुच्चयासम्भवात्। तर्ह्येवं विरोधाभावादुपपन्नं सर्व्वमिति चेत् न। पूर्व्वं ज्ञान-मार्गीयज्ञानवतः पश्चाद्भक्तिमार्गीयज्ञानवतो लयस्थाननिर्द्धारा-सम्भवात्।

अपरञ्च। ततो मां तत्त्वतो ज्ञात्वेतिवचनाद्भक्तिमार्गे तत्त्वतो भगवत्ज्ञानमेव प्रवेशसाधनमिति मन्तव्यं। तथा च

मत्कामा रमणं जारं मत्स्वरूपाविदोऽवलाः।
ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः॥

इति वाक्यात् ज्ञानमार्गीयभक्तिमार्गीयज्ञानरहितानामपि भगवत्प्राप्तेस्तत्साधनत्वनिरूपकश्रुतिविरोधः। तथाच क्वचित् ज्ञानं मुक्तिसाधनत्वेनोच्यते क्वचिद्भक्तिः क्वचिन्नोभयमपी-त्येकतरसाधनानिश्चयान्मुक्तिसाधने मुमुक्षोः प्रवृत्त्यसम्भव इति प्राप्त आह। गतेरर्थवत्त्वमित्यादि। गतेर्ज्ञानस्यार्थवत्त्वं फल-जनकत्वमुभयथा मर्य्यादापुष्टिभेदेनेत्यर्थः।

अत्रायमाशयः। एष उ एव साधु कर्म्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषतीत्यादिश्रुतिभ्यो भगवान् सृष्टिपूर्व्वकाल एवैतस्मै जीवायैतत्कर्म्म कारयित्वैतत् फलं दास्य इति विचारितवानिति तथैव भवति। तत्रोक्तरीत्या मुक्तिसाधनाननुगमे हेतुरवश्यं वाच्यः। एवं सति कृतिसाध्यं साधनं ज्ञानभक्तिरूपं शास्त्रेण बोध्यते। ताभ्यां विहिताभ्यां मुक्तिर्मर्य्यादा[*] तद्रहितानामपि स्वस्वरूप-

* ताभ्यां मुक्तिर्मर्य्यादेति खं।

बलेन स्वप्रापणं पुष्टिरित्युच्यते । तथाच यं जीवं यस्मिन्मार्गेऽङ्गीकृतवांस्तं जीवं तत्र प्रवर्त्तयित्वा तत्फलं ददातीति सर्व्वं सुस्थं । अतएव पुष्टिमार्गेऽङ्गीकृतस्य ज्ञानादिनैरपेक्ष्यं मर्य्यादायामङ्गीकृतस्य तदपेक्षितत्वञ्च युक्तमेवेति भावः । अत्र साधकत्वेन विपक्षे बाधमाह *। अन्यथा हि विरोध इति । अन्यथा मर्य्यादापुष्टिभेदेन व्यवस्थाया अकथने विरोधाद्धेतोस्तथेत्यर्थः । विरोधस्तु पूर्व्वपक्षग्रन्थ उपपादितः । एतेनैव ननु श्रवणादिरूपा प्रेमरूपा च भक्तिरविशेषेण पापक्षय एवोदेत्यत कश्चिद्विशेषोऽस्ति तत्राधुनिकानामपि भक्तानां दुःखदर्शनाच्छ्रवणादेः पापनाशकत्वश्रवणाच्चाविशेषपक्षस्त्वसङ्गतः । अथ श्रवणादिरूपा पापे सत्यपि भवति प्रेमरूपा तु तन्नाश एवेति विशेषो वाच्यः । सोऽपि † प्रेमवतामप्यक्रूरादीनां मणिप्रसङ्गे भगवता समं कापथ्यकृतिश्रवणान्न साधीयानित्यपि शङ्का निरस्ता वेदितव्या । तथाहि मर्य्यादापुष्टिभेदेनाङ्गीकारे वैलक्षण्यान्मर्य्यादायामङ्गीकृतानां मुमुक्षयैव श्रवणादौ प्रवृत्तिः ‡ स्तद्दाढर्य्येनैव भगवति प्रेमापि न तु निरूपधिः । कदाचिद्वस्तुस्वभावेन मुक्तीच्छानिवृत्तावपि तद्भक्तेः साधनमार्गीयत्वादनिच्छतो मे गतिमाण्वीं § प्रयुङ्क्त इति वाक्यादन्ते मुक्तिरेव भवित्री । अस्मिन्मार्गे श्रवणादिभिः पापक्षये प्रेमोत्पत्तिस्ततो मुक्तिः । पुष्टिमार्गेऽङ्गीकृतेस्त्वत्यनुग्रहसाध्य-

* बाधकमाहेति ख' ।

† सापीति ख ।

‡ प्रकृतिरिति ख' ।

§ गतिमन्वीमिति ख' ।

त्वात् तत्र च पापादेरप्रतिबन्धकत्वात् श्रवणादिरूपा प्रेमरूपा च युगपत्पौर्वापर्य्येण वा वैपरीत्येन वा भवत्येव। अत्र श्रवणादिकमपि फलरूपमेव स्नेहेनैव क्रियमाणत्वात् न विधिविषयः। न ह्यविद्यादिमुक्त्यन्तरूपभजनानन्दात्यन्तरायरूपाभ्रङ्कषाविरलविविधमहातरुग्रहनानां दहने लोलुपस्यानुग्रहानलस्य * तदान्तरालिकपापतूलं प्रतिबन्धकमिति वक्तुं शक्यं। तदुक्तं श्रीभागवते

स्वपादमूलं भजतः प्रियस्य
त्यक्तान्यभावस्य हरिः परेशः †।
विकर्म्म यच्चोत्पतितं कथञ्चित्
धुनोति सर्व्वं हृदि सन्निविष्टः॥ इति

विकर्म्म प्राक्तनं तद्दुःखदमिति स्वयञ्च हरित्वेन दुःखहर्त्तेति धुनोति। उक्तविशेषणविशिष्टस्य स्वतो विकर्म्मोत्पत्त्यसम्भवात् ‡ सांसर्गिकं मत्तोभूतं न तु मया कृतमितिवद्वा यत् कृतं विकर्म्म तत् कथञ्चिदुत्पतितमित्युच्यते। त्यक्तान्यभावत्वेन भगवत्सेवाव्यासङ्गेनेन्द्रद्युम्नाख्यपाण्ड्यराजवन्महदागमनाद्यज्ञानं वा वक्तोक्तरूपे भक्तेर्विकर्म्मोक्तावत्त्वचिज्ञापनाय वा कथञ्चिदित्युक्तवान्। तेन तर्कितं विकर्म्मोचाप्यभिप्रेतमिति § ज्ञायते। एतादृशस्यापि यदि विकर्म्म भवेत् तदा तन्निवृत्त्यर्थं न तेनान्यत्कर्त्तव्यं।

* अवग्रहानलस्येति खं।

† प्रवेश इति खं।

‡ स्वतोऽतिकर्म्मोत्पत्त्यसम्भवादिति खं।

§ स्वताभिप्रेतमिति खं।

भगवानेव हृदि निविष्टस्तद्धुनोति यत इति । कदाचित् स्वभक्ति-बलस्फूर्त्या सदोषमपि जनं कृतार्थीकरिष्यामीत्यङ्गीकुर्य्यात् चेत् भक्तस्तदैव* तत्हृदिस्थएव तत्संसर्गजं दोषमस्यैतदङ्गीकारेण तद्दोषमपि धुनोतीति सर्व्वपदेनोच्यते । चिरकालभोग्यमपि तत्क्षणेनैव नाशयति । तन्नाशने कालादेरप्रतिबन्धकत्वमित्यपि ज्ञापयितुं परस्य कालादेरीशत्वमुक्तं । अत्र भजनादिहृन्निवेशा-न्तानां स्पष्टएव विकर्म्मणि सत्यपि सम्भव इति ।

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

ननु मुक्तेरेव सर्व्वत्र फलत्वमुच्यते । युक्तञ्चैतत् संसृतेर्दुःखा-त्मकत्वात् । तन्निवृत्तेः सर्व्वेषामिष्टत्वात् । पुष्टिमार्गीयभक्तानान्तु तदनपेक्षितमुच्यते । तदुक्तमथर्व्वणोपनिषत्सु ष्टादशार्णमन्त्रस्वरूप-मुक्त्वा पद्यते परं ब्रह्मैतद्यो धारयतीत्यादेरन्ते सोऽमृतो भवती-त्यादि । एतदग्रे किं तद्रूपं किं रसनं कथं हैतद्भजनमित्यादि प्रश्नोत्तरं पद्यते । भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनैवा-मुष्यात्मनः कल्पनमेतदेव नैष्कर्म्यमिति । एतदत्र विचार्य्यते । मन्त्रा-वृत्तितदधिष्ठातृरूपध्यानादेरमृतत्वं † फलमुच्यते । भजनस्वरू-पञ्च यावत् फलनैराश्येन भगवत्यात्मनः कल्पनमित्युच्यते । न च फलनैराश्येन भजनेऽप्यन्ते मुक्तिरेव भवित्रीति वाच्यं । तं यथा-यथोपासते तथैव भवति तद्धैतान् भूत्वावतीति श्रुतेर्मुक्ति-साधनत्वेन‡ ज्ञात्वा भजतः सैव फलं स्वरूपस्यैव स्वतन्त्रपुरुषा-

* तदैव तत्हृदिस्थस्तत्संसर्गजं इति ख' ।

† अमृतत्वे फलमिति ख' ।

‡ मुक्तिसाधनमिति ख' ।

र्थत्वमनुभवन् यो भजते तस्य तदेव * फलमिति यतो निर्णयः सम्पद्यते। ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति भगवद्वाक्याच्च। अतएव रहस्यभजनं लक्ष्यमुक्तं। तथाच† श्रौतत्वभगवत्सम्बन्धित्वयोरविशेषात् कतमो गरीयानिति संशये गूढ़ाभिसन्धिः पठति। मुमुक्षोः सकाशाद्रहस्यभजनकर्त्तैवोपपन्नः उपपत्तियुक्तः। तमेवोद्घाटयति। तल्लक्षणार्थोपलब्धेरिति। तल्लक्षणो भगवत्स्वरूपात्मको योऽर्थः स्वतन्त्रपुरुषार्थरूपस्तदुपलब्धेः स्वाधीनत्वेन तत्प्राप्तेरित्यर्थः। यद्यपि पुरुषोत्तमे प्रविष्टे तदानन्दानुभवो भवति तथापि न प्रभोस्तदधीनत्वं भक्तितिरोभावात् प्रत्युत वैपरीत्यं भजनानन्दस्य तत आधिक्यन्तु मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगं। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः। नारायणपरा इत्युपक्रम्य स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन इत्यादिवाक्यैरध्यवसीयते। अतएव ‡ सामीप्यवाच्युपसर्ग उक्तः। तेन दासीत्वेन दासत्वेन लीलायां सुहृत्त्वेन प्रभुनिकटे स्थितिरुक्ता भवति। न च महत्पदार्थस्वरूपाज्ञानादल्पएवानन्दे यथा सर्व्वाधिक्यं मन्वानः§ पूर्व्वोक्तं न वाञ्छति तथात्रापीति वाच्यं। दीयमानानामर्थानां स्वरूपाज्ञानासम्भवात् अनुभवविषयीक्रियमाणत्वस्यैवात्र दीयमानपदार्थत्वात्। तदज्ञाने स्वर्गादिचये तुल्यदर्शित्वासम्भवश्च। मुक्तिं ददाति कर्हिचित् स्म न भक्ति-

---

* तदेवेति ख॑।

† तथात्वमिति ख॑।

‡ अतएवासामीप्ये ति ख॑।

§ मघान इति ख॑।

योगमिति वाक्ये भक्तेराधिक्यं स्पष्टमेवोच्यते । तस्मात् न्यूनार्थ-जिघृक्षोः सकाशात् पूर्णार्थवान् महानिति युक्तमेवास्योपपन्नत्वं । इममेवार्थं दृष्टान्तेनाह । लोकवदिति । यथा स्वाधीन-भर्तृका नायिका तदवस्थाननुगुणगृहवित्तादिकन्दीयमानमपि नोरीकरोति तथेत्यर्थः । अथवा स भगवानेव लक्षणमसाधारणो धर्म्मो यस्य स तल्लक्षण उत्कटभक्तिभावः स एवार्थः स्वतन्त्रपुरु-षार्थरूप इत्यग्रे पूर्व्ववत् । भगवत्प्राकट्यवानेव हि भक्तो भक्तत्वेन ज्ञायत इति तथा । एतेन ज्ञाप्यं हि ज्ञापकादधिकं भवति । एवं सति यत् ज्ञापकं परमकाष्ठापन्नं वस्तु पुरुषोत्तमस्वरूपं सर्व्व-फलरूपं तन्महित्वं * कथं वक्तुं शक्यमिति सूच्यते ।

## अनियमः सर्व्वासामविरोधः शब्दानु-मानाभ्यां ॥ ३१ ॥

अथर्व्वणोपनिषत्सु पठ्यते परब्रह्मैतद्यो धारयति रसति भजति ध्यायते प्रेमति शृणोति श्रावयत्युपदिशत्याचरति सोऽमृतो भवतीति । तत्र धारणादीनां समुदितानामेवामृतसाधकत्वं उत प्रत्येकमपीति भवति संशयः । अत्र धारणादिसाधनकलाप-मुक्ता फलमुच्यत इति समुदितानामेव मुक्तिसाधकत्वं उपलक्षणं चैतच्छ्रवणादिनवविधभक्तीनामप्येवमेव तथात्वमिति पूर्व्वपक्षे सिद्धान्तमाह । अनियम इति । समुदितानामेव तेषां फल-साधकत्वमिति नियमो नास्तीत्यर्थः । तत्रोपपत्तिमाह । सर्व्वा-सामविरोध इति । चिन्तयंश्चेतसा कृष्णं मुक्तोभवति संसृतेरिति श्रुत्या चिन्तनमात्रस्य तथात्वमुच्यते । पञ्च पदी जपन्नित्यायुक्ता

* महत्त्वमिति ख ।

ब्रह्म संपद्यते ब्रह्म संपद्यत इति श्रुत्या कीर्त्तनमात्रस्य तथात्वमु-च्यते। तथाच प्रत्येकपक्ष एव सर्व्वासां श्रुतीनामविरोधः स्यात्। एवं सति परब्रह्मैतद्यो धारयतीत्यादिषु सोऽमृतो भवतीति पदं प्रत्येकं सम्बध्यत इति ज्ञेयं। ननु यथा दण्डादीनां प्रत्येकं घटहेतुत्वोक्तावपि नैकस्यैव तज्जनकत्वमेवमत्राप्येकैकस्य चिन्त-नादेस्तथात्वोक्तावपि फलसाधकत्वं समुदितानामेव तेषामिति चेत्। मैवं। योऽर्थो यत्प्रमाणैकसमधिगम्यः स तेन प्रमाणेन यथा सिद्ध्यति * तथा मन्तव्यः। दण्डादेस्तथात्वं प्रत्यक्षेण गृह्यत इति तत्र तथास्तु। प्रकृते तु तेषां तथात्वमलौकिकशब्दैकसमधि-गम्यं श्रुतिसूक्तैव। न चोक्तन्यायः श्रुतिष्वपि तात्पर्य्यनिर्णायको भवतीति वाच्यं। अलौकिकेऽर्थे † लौकिकस्यासामर्थ्यात्। अन्यथा ब्रह्मणा मनसैव प्रजाजनने ‡ निषेकादिकमपि कल्प्येत। स्मृतिरपि

केवलेन हि भावेन गोप्योगावः खगामृगाः।
येऽन्ये मूढधियोनागाः सिद्धा मामीयुरञ्जसा॥

एतावान् सांख्ययोगाभ्यामित्युपक्रम्यान्ते नारायणस्मृति-रित्यादिरूपैवमेवाह। इममेवार्थं हृदि कृत्वाह सूत्रकारः शब्दानुमानाभ्यामिति श्रुतिस्मृतिभ्यामित्यर्थः। ते चोक्ते। एतेन सूत्रकारस्यान्योऽप्यनुशयोऽस्तीति भाति। यत्नोक्तसाधनस्तोम§-

* प्रमाणेन सिद्ध्यति इति ख।

† अलौकिकस्यासामर्थ्यादिति ख।

‡ प्रजनने इति ख।

§ स्तोम इति ख।

सम्पत्तिरेकस्मिन् भक्तोऽस्ति तत्रैकेनैव मुक्तावितरसाधनत्व-बोधकश्रुतिविरोधात् श्रवणकीर्त्तनस्मरणानां मुक्त्यव्यवहित-पूर्व्वक्षणे युगपदपि सम्भवादन्यथासिद्धिसम्भवे विनिगमका-भावादेकेनैव मुक्तिरिति न नियमोऽतः प्रत्येकसाधकत्वबोधि-कानां सर्व्वासां श्रुतीनां मिथोविरोधः तर्ह्येकत्र तथात्वे सर्व्व-त्रैव तथास्त्वित्याशङ्क्य तत्र बाधकमाह। शब्दानुमानाभ्यामिति पूर्व्ववत्। तत्र प्रत्येकमपि मुक्तिहेतुत्वमुच्यत इति न तथेत्यर्थः। यत्र प्रत्येकमपि तथात्वं तत्र किमुवक्तव्यं समुदितानां तथात्व इति भावः। तेन श्लिष्टः प्रयोगोऽयमिति ज्ञेयं।

## यावदधिकारमवस्थितिराधिकारिकाणां॥ ३२॥

पूर्व्वं मुमुक्षुभिः साधनत्वेन क्रियमाणानां भगवद्धर्म्माणां मुक्तिसाधनप्रकारो विचारितः। अधुना तु भगवान् स्वविचारितकार्य्यं लौकिकैश्वर्य्याद्यशक्यं ज्ञात्वा स्वैश्वर्य्यादिकं दत्वा येन जीवेन तत्कारयति स जीवस्तैर्द्धर्म्मैर्मुक्तो भवति न वेति विचार्य्यते। तत्र जीवकृतभगवद्विषयकधर्म्माणां यत्र तत्साधकत्वं तत्र भगवदीयानां धर्म्माणां तत्साधकत्वं सुतरामेव तेषां स्वकृत्य-साध्यत्वेनाविधेयत्वात् तत्साधनेष्वप्रवेशोऽपीति सन्देहे निर्णय-माह। यावदित्यादि। यस्मिन् जीवे यत्कार्य्यसाधनार्थमधि-कारो भगवता दत्तस्तत्कार्य्यसाधनक्षमास्तस्मिन्ये स्वधर्म्मा भग-वता स्थापितास्त आधिकारिका इत्युच्यन्ते। तत्कार्य्यसम्पत्तिरेव तदधिकारप्रयोजनमिति तावदेव तेषां तस्मिंस्थितिरित्यर्थः। एवं सति तत्सम्पत्तौ सोऽपि निवर्त्तत इति तत्सम्बन्धिनो

धर्म्मा अपि निवर्त्तेत * इति मुक्तिपर्य्यन्तं न तेषां व्यापारसम्भवो भगवता तथैव विचारितत्वात्। मुक्तिस्तु भक्त्यैवेति भावः। यच्च

ब्रह्मणा सह ते सर्व्वे संप्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदं॥

इति वाक्यं तत्त्वाकल्पान्तं येषामधिकारः सप्तर्षिप्रभृतीनां तद्विषयकमिति ज्ञेयं। अन्यथा भगवद्दत्ताधिकारसामर्थ्यस्य भरतस्य स्वाधिकारसमाप्तौ मुक्तिं न वदेत्। कृतात्मान इति पदात् तेषामपि भगवति कृतान्तःकरणानामेव परस्य भगवतः परपदेनापि वैकुण्ठे प्रवेश उच्यते न त्वाधिकारिकगुणैः।

## अक्षरधियान्त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तं॥ ३३॥

नन्वाथर्व्वणोपनिषद्वाक्यैर्भगवद्धर्म्माणां मुक्तिसाधनत्वमुच्यते। श्रुत्यन्तरेषु तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय। ज्ञानादेव तु कैवल्यं तरति शोकमात्मवित्। ब्रह्म वेद ब्रह्मैव भवतीत्यादिषु ज्ञानस्यैव मुक्तिसाधनत्वमुच्यते। श्रुतित्वाविशेषादुभयोस्तथात्वे कारणवैजात्ये कार्य्यवैजात्यस्यावश्यकत्वान्मुक्तौ च तदसम्भवाद्भक्त्या मामभिजानातीति वाक्याद्भक्तौ ज्ञानस्यापि सम्भवात् ज्ञानेनैव मुक्तिरिति पूर्व्वपक्षे ज्ञानसाधनत्वनिरूपकश्रुतितात्पर्य्यं निरूपयन् पुरुषोत्तमप्राप्तेरेव मुक्तिपदवाच्यत्वात् तद्भजनस्यैव तत्प्रापकत्वमिति हृदि कृत्वाह अक्षरधियामित्यादिः। तु शब्दः पूर्व्वपक्षनिरासे। वाजसनेयके श्रूयते। एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमित्यादि। तथाथर्व्वणि

* निवर्त्तेत इति ख।

च। अथ परा यया तदक्षरमधिगम्यत इति। तेन ज्ञानमार्गेऽक्षर-विषयकाण्येव ज्ञानानि निरूप्यन्ते पुरुषोत्तमविषयकाणि नेति निश्चीयते। ब्रह्मविदाप्नोति परमिति श्रुतावक्षरब्रह्मविदोऽक्षरात् परस्य प्राप्तिरुच्यते। अक्षरादपि चोत्तम इति भगवद्वाक्याच्चाक्षरातीतः पुरुषोत्तमः। भक्त्या मामभिजानातीति वाक्ये मामितिपदात् पुरुषोत्तमविषयकं ज्ञानमुच्यते न त्वक्षर-विषयकं।

किञ्च। ब्रह्मभूतस्य भक्तिलाभोक्तेस्तस्य चानन्दांशाविर्भावात्मकत्वात् तस्य चाविद्यानाशजन्यत्वात् तस्य चाक्षरज्ञान-जन्यत्वात् पूर्व्वकक्षा*विश्रान्तमेवाक्षरज्ञानं। एवं सत्यक्षरविषयिणीनां धियां श्रुतौ मुक्तिसाधनेषु योऽवरोधः प्रवेशनं गणनेति यावत् स सामान्यतद्भावाभ्यां हेतुभ्यां। पुरुषोत्तमसम्बन्धि-सम्बन्धी† मुक्तिरिति सामान्यं। मर्य्यादामार्गेऽङ्गीकृतानां ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति समः सर्व्वेषु भूतेषु मद्भक्तिं लभते परामिति‡ वाक्यात् ब्रह्मभावानन्तरमेव भगवद्भावसम्भवात् तेन पुरुषोत्तमे प्रवेशात् तत्र परम्परोपयोगी ब्रह्मभावस्येत्युभाभ्यां हेतुभ्यां तथेत्यर्थः। वस्तुतस्तु पुरुषोत्तमप्राप्तिरेव मुक्तिरिति भावः।

नन्वक्षरस्याविशिष्टत्वेन तदुपासकानामपि तथात्वात् केषाञ्चित्तत्रैव लयः केषाञ्चिद्भक्तिलाभ इति कथमुपपद्यत इत्याशङ्क्य

* पूर्व्वकक्षविश्रान्त इति ख'।

† सम्बन्धीसम्बन्धी इति ख'।

‡ पराविति ख'।

तत्र हेतुं दृष्टान्तेनाह । औपसदवदिति । उपसदाख्ये कर्म्मणि । तानूनप्त्रसर्गाख्यमौपसदं कर्म्मास्ति । तत्रातिथ्यायाध्रौवा-स्रुचि चमसे वायदाज्यं चतुरवत्तं पञ्चावत्तं वा समवद्यति तत्ता-नूनप्त्रमित्युच्यते । अनाधृष्टमसीति मन्त्रेण षोड़शाप्यृत्विजो यजमानेन सह तानूनप्त्रसमवस्पृशन्त्यनु मे दीक्षामिति मन्त्रेण यजमानस्तत्समवस्पृशन्तमृत्विजं कामयेतायं यज्ञ*यशसमृच्छे-दिति तं प्रथममवमर्शयेदिति श्रुतौ कल्पे च । अत्र सर्व्वेषा-मृत्विजां तानूनप्त्रित्वाविशेषेऽपि यस्मिन् स्नेहातिशयेन तथेच्छा तत्रैव तथाकृतिर्नेतरेषु । नहि तत्राविशिष्टेषु कथ-मेवं कृतिरितिपर्य्यनुयोगः सम्भवत्येवमिहापीत्यर्थः ।

ननु श्रवणादेर्यथा पुरुषोत्तमसम्बन्धित्वेन तत्प्राप्तिहेतुत्व-मेवमक्षरस्याप्यस्त्वित्याशङ्का तु निखिलासुरजीवतमःपुञ्जनिरास-केन यदुवंशोदयाचलचूड़ामणिनैव निरस्तेति न स्वतो वक्त-मुचितेत्याशयेनाह । तदुक्तमिति । भगवद्गीतास्विति शेषः । तत्र यदक्षरं वेदविदो वदन्तीत्युपक्रम्य स याति परमां गति-मित्यन्तेनाक्षरप्राप्त्युपायमुक्त्वा अनन्यचेताः सततमित्यादिना स्वप्राप्त्युपायं वैलक्षण्यं चोक्त्वा भक्त्येकलभ्यत्वं स्वस्य वक्तुं पूर्व्वं क्षराक्षरयोः स्वरूपमाह । सहस्रयुगपर्य्यन्तमित्युपक्रम्य प्रभव-न्त्यहरागमे इत्यन्तेन क्षरस्वरूपमुक्त्वा परस्तस्मात् तु भावोऽन्य इत्युपक्रम्य तद्धाम परमं ममेत्यन्तेनाक्षरस्वरूपमुक्तं । अत्र पूर्व्वं क्षरस्वरूपमुक्तमिति परस्तस्मात्त्वित्यत्र क्षरादेव परत्वमुच्यते । तच्छब्दस्य पूर्व्वपरामर्शित्वात् तस्यैव पूर्व्वमुक्तत्वादतएवाक्षर-

* यज्ञमिति ख ।

ननु जनकोह वैदेह इति श्रुतिसाहाय्यादाचारदर्शनं त्याग-दर्शनादधिकबलमित्यत उत्तरं पठति ।

असार्व्वत्रिकी ॥ १० ॥

ब्रह्मविदां सर्व्वेषामेतदाचारश्चेन्निरूपयेच्छ्रुतिस्तदा त्वदुक्तं स्यान्नत्वेवं* यत एतादृशी श्रुतिर्ब्रह्मवित्सु सर्व्वेषु न श्रूयते । तथाहि ।

एतद्ध स्म वै तद्विद्वांस आह ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्थां वयं यक्ष्यामहे एतद्ध स्म वै तत् पूर्व्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे । एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च† लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्य्यं चरन्ति । एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राजेत्यादि श्रुतयो बह्वस्तद्विदां कर्म्मत्यागमेवानुवदन्ति । अतस्त्यागपक्ष एव बलवान्‡ ।

ननु ब्रह्मवित्त्वाविशेषेऽप्येकेषां§ कर्म्मकृतिरेकेषां तत्त्याग इति विभागः कुत इत्याशङ्क्य तत्र हेतुमाह ।

विभागः शतवत् ॥ ११ ॥

एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेर्मानुषानन्दमारभ्य ब्रह्मानन्दपर्य्यन्तं येऽगणिता आनन्दास्ते

---

* नह्येवमिति खं ।

† वित्तैषणायाश्च इति ख पुस्तके नास्ति ।

‡ एवं बलवान् इति खं ।

§ ब्रह्मवित्त्वाविशेषेऽपीति खं ।

सर्व्वे पुरुषोत्तमानन्दात्मका* एव। एवं सति येषु यावानानन्दो दत्तोऽस्ति तावन्तं तन्निरूपयन्त्यधिकारतारतम्येन तद्दानमिति ज्ञापनाय शतोत्तरं शतोत्तरमानन्दं श्रुतिर्न्यरूपयत् अतएव पुरुषायुःसंख्यासमानसंख्ययैवोत्कर्षं † उक्तत्वेन पुरुषधर्म्मस्याधिकारस्यैवोत्कर्षः सूच्यते। एवं प्रकृतेऽप्यन्यभावराहित्यतारतम्येन भगवद्भावतारतम्यं अत्र त्वनुग्रह एवाधिकाररूप इति तदुत्कर्षे त्यागस्तदनुत्कर्षे नेत्यर्थः। यच्चोक्तं तद्वतो विधानादिति तत्राह।

अध्ययनमात्रवतः ॥ १२ ॥

यदुक्तं ब्रह्मिष्ठो ब्रह्मेत्यादि तत्र ब्रह्मशब्देन वेदएवोच्यते नतु परस्तथाच तं ‡ ब्रह्मत्वेनाविकृतशब्दरूपत्वं ज्ञात्वा सततं तदध्ययनमात्रं यः करोति नतु तेन किञ्चित् कामयते तस्याधिकारी ब्रह्मत्वार्त्विज्य इत्युच्यत इति न ब्रह्मज्ञानस्य कर्म्मशेषत्वं। प्रत्ययस्यातिशायनार्थकत्वादतिशयेन ब्रह्मरूपस्तदैव भवतीति युक्तं तस्य तदार्त्विज्यमेवं सति ब्रह्मपदं ब्राह्मणपरमपि सङ्गच्छते। अथवा वेदाध्ययनमात्रवतः कर्म्मण्यधिकारी नतु ब्रह्मविदोऽपीत्यर्थः। न च तदन्तःपातित्वेन वेदान्तानामप्यध्ययनस्यावश्यकत्वे तत्प्रतिपाद्यब्रह्मज्ञानस्याप्यवर्ज्जनीयत्वात् तद्वतएव तत्राधिकार इति वाच्यं। शाब्दपरोक्षज्ञानस्य ब्रह्मज्ञानत्वाभावात्। नहि सितामधुरेति शाब्दज्ञानमात्रवांस्तन्माधुर्य्यज्ञो भवति। तथा सति पित्तोपशमादिकं§ तत्कार्य्यमपि स्यात्

---

* सर्व्वपुरुषोत्तमानन्दात्मका इति ख।

† उत्कर्षं इति ख।

‡ तथा तत्त्वं ब्रह्मत्वेनेति ख।

§ पित्तोपशयादिकमिति ख।

नत्वेवं। अतएव छान्दोग्ये सनत्कुमारेण यद्वेत्थ तेन मोपसीदे-
त्युक्तो नारद ऋग्वेदमारभ्य सर्पदेवजन*विद्यापर्य्यन्तं स्वाधी-
तमुक्त्वाह सोऽहं मन्त्रविदेवास्मि नात्मविदित्यतोऽपरोक्षब्रह्म-
ज्ञानमेव ब्रह्मज्ञानमुच्यते। अतएव तैत्तिरीयोपनिषत्सु वेदान्त-
विज्ञानसुनिश्चितार्था इति पठ्यते। विज्ञानमनुभवएव नतु ज्ञान-
मात्रमतो दूरापास्तं कर्म्मशेषत्वं ब्रह्मणः। तं विद्याकर्म्मणीत्या-
दिषु संसार्य्यात्मनः पूर्व्वदेहत्यागसामयिकं वृत्तान्तं निरूपयति
नतु ब्रह्मविद इति समन्वारम्भणादिति सूत्रमुपेक्षितमाचार्य्येण।
यच्चोक्तं नियमाच्चेति तत्राह।

नाविशेषात्॥ १३॥

आश्विनमित्यादिश्रुतिभ्यः कर्म्मकृतौ† यथा नियमः श्रूयते
न तथा त्याग इति यदुक्तं तन्न। कुतः। अविशेषात्। न
कर्म्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरिति श्रुतिः
कर्म्मादिनाऽमृतत्वाप्राप्तिमुक्त्वा तत्त्यागेन तां वदन्ती कर्म्मत्याग-
स्यावश्यकत्वं वदतीति तस्मान्न विशेषो यत इत्यर्थः। तथा-
चामृतत्वमानशुरितिपदात् मुमुक्षोः कर्म्मत्यागनियमोऽमुमुक्षो
स्तत्कृतिनियम इति व्यवस्थेति भावः।

अथवा ननु क्रमप्राप्ते तुरीयाश्रमे हि कर्म्मत्यागो द्वितीये
तस्मिन् कर्म्मकरणनियमस्तत्र च कर्त्तुरङ्गत्वेन तत्स्वरूपज्ञान-
मावश्यकं तच्च वेदान्तैरेवेति कथं न कर्म्मशेषत्वमित्युत्सूत्र-
माशङ्क्य निषेधति। नेति। यदहरेव विरजेदिति श्रुतेस्तावत्

* देवयजनविद्या इति खं।

† कर्म्मकृतौ यथा इति खं।

कर्म्माणि कुर्व्वीत न निर्विद्येत यावतेति भगवद्वाक्याच्च त्यागे वैराग्यस्य च प्रयोजकत्वादाश्रमविशेषे विशेषाभावा*दप्रयोजक-त्वादित्यर्थः। यत्रापि क्वचित् क्रमप्राप्तिस्तत्रापि न तज्ज्ञानं ब्रह्मज्ञानमिति पूर्व्वसूत्रएवोक्तमिति भावः। एतेन वेदाध्यय-नादिकमप्यप्रयोजकमिति ज्ञापितमतएव शुकस्य वैराग्याति-शयादुपनयनादेरप्यनपेक्षोच्यते।

एवं सूत्रद्वयेन कर्म्माधिकारसम्पादकत्वेन ब्रह्मज्ञानस्य तच्छेषत्वं निरस्तं। अथ ग्रहिलतया ब्रह्मिष्ठ इत्यत्र ब्रह्मपदेन परएवोच्यत इति वदसि तत्रापि वदामः।

स्तुतयेऽनुमतिर्वा॥ १४॥

दर्शपूर्णमासावेताद्दशौ यत्र ब्रह्मविदार्त्विज्याधिकारीति तत्स्तुत्यर्थं ब्रह्मिष्ठो ब्रह्मेत्यनेन ब्रह्मविदोप्यार्त्विज्येऽनुमतिः क्रियते न तु तस्याधिकारित्वमभिप्रेतमुक्तानुपपत्तिभिरित्यर्थः।

कामकारेण चैके॥ १५॥

नन्वेष नित्यो महिमा ब्राह्मणस्य† न कर्म्मणा‡ वर्द्धते नोक-नीयानिति श्रुत्या ब्रह्मविदः कर्म्मकृतगुणदोषौ निषिध्येते। स च प्राप्तिपूर्व्वक इति ब्रह्मविदः§ कर्म्मकरणमावश्यकमिति प्राप्त उच्यते। कामकारेणेति। करणं कारः। कामेनेच्छया करणं कामकारस्तथाच परानुग्रहार्थमिच्छामात्रेण नतु विधिवशाद्यत्

---

* आश्रमविशेषाभावादिति ख।

† ब्राह्मणेति ख।

‡ कर्म्मणीति ख।

§ ब्रह्मवित् ब्रह्मदः इति ख।

करणं तत् कामकार इत्युच्यते। तथाचैवं कृते कर्म्मणि तत्कृतगुण-दोषप्रसक्तौ तत्प्रतिषेधमेके शाखिनः एष नित्य इत्यादि पठन्ति। न ह्येतावता कर्मकृत्यधिकारप्राप्तिरिति भावः। अथवा कामेन कारो यस्य स तथा तादृशेन कर्म्मणा प्राप्तवृद्धिह्रासयोः सम्बन्धाभावं ब्रह्मविद्येके पठन्तीत्यर्थः। चकारेणेश्वराज्ञया लोकसंग्राहार्थं कृतं कर्म्म* समुच्चीयते सर्व्वस्य वशी सर्व्वस्येशान इति श्रुतेस्तथा।

## उपमर्द्दञ्च ॥ १६ ॥

अनेन कर्म्माधिकाराभावे हेत्वन्तरमुच्यते। द्वैतभाने हि यथाकथञ्चित् कर्मकृतिसम्भावनापि यस्य त्वखण्डब्रह्माद्वैतभानं ब्रह्मैत्येव न त्विदं ब्रह्मेति† सखण्डं। अतोहंत्वेन प्रपञ्चस्यापि भानात् सखण्डत्वं‡। तथाचाखण्डतज्ज्ञाने कर्मतदधिकारादेरुप-मर्द्दं चैके शाखिनः पठन्तीति न ब्रह्मज्ञानस्य कर्मशेषत्वसम्भा-वनापीत्यर्थः। श्रुतिस्तु यत्र त्वस्य सर्व्वमात्मैवाभूत्तत् केन कम्प-श्येदित्यादिरूपा।

## ऊर्द्ध्वरेतःसु च शब्दे हि॥ १७॥

अत्रेदं विचार्य्यते। ब्रह्मचर्य्यानन्तरं गार्हस्थ्यमपि श्रुत्या बोध्यते। ब्रह्मचर्य्यादेव प्रव्रजेदित्यादिश्रुतिभिर्ब्रह्मचारिणएव प्रव्रजनमपि बोध्यते। एवं सत्यविरोधाय यदहरेवेति श्रुतेश्च

---

* कृतकर्म्मः इति ख ।

† ब्रह्मेति ह्यखण्डमिति ख।

‡ खण्डत्वमिति ख ।

रागितद्रहितभेदेन विषयभेदो वाच्यः। तत्र * ब्रह्मचर्य्याविशेषे-ऽपि भगवदनुग्रहविशेषजचित्तशुद्धिविशेषजवेदान्तार्थपरिज्ञान-मेव हेतुर्वाच्यः। वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वा इति श्रुतिरिममेवार्थमाह। तथा चैतादृशा एवोर्द्ध-रेतस इत्युच्यन्ते। एवं सत्यूर्द्धरेतःसु कर्म्माभाव उक्तरीत्या त्वया-प्युरीकार्य्य इति ज्ञानरहितानां कर्म्मण्यधिकारस्तद्गतां सन्न्यास इति त्वदुक्ताद्विपरीतोऽर्थः सिद्ध्यतीति क्व कर्मशेषत्वसम्भावना ज्ञाने। ननु सन्न्यासेऽपि तदाश्रमीणं कर्म्मास्तीति वैराग्यसहकृतं ज्ञानमेतच्छेषभूतं तदसहकृतं तदग्निहोत्रादिशेषभूतमिति न वैपरीत्यमिति प्राप्त आह। शब्दे हीति। ज्ञानस्वरूपं तत्-फलञ्च न युक्तिसिद्धं किन्तु वेदमात्रसिद्धं। तत्र तु तमेवं विद्वानमृत इह भवति ब्रह्मविदाप्नोति परं † यएनं विदुर-मृतास्ते भवन्तीत्यादिवाक्यैर्ब्रह्मज्ञानस्य मोक्षएव फलं श्रूयते सर्व्वसाधनानां साक्षात्परम्पराभेदेन तत्रैव पर्य्यवसानादतो धर्म्मिग्राहकमानविरोधात् सन्न्यासाश्रमीणकर्म्मशेषत्वमपि न वक्तुं शक्यमित्यर्थः। नन्वेवं सन्यासवैयर्थ्यमिति चेत्। न। ब्रह्म-विदतिरिक्तसङ्गस्य भगवद्विस्मारकत्वेनावश्यत्याज्यत्वेन श्रुत्या कथनादतएव वेदान्तविज्ञानसुनिश्चितार्था इत्युक्त्वा सन्न्यास-योगाद्यतयः शुद्धसत्त्वा इत्युक्तं। अत्र पञ्चम्या अन्तःकरणे संस्कारविशेषाधायकत्वञ्च प्रतीयते सन्न्यासस्य। स च संस्कारः फलोपकार्य्यङ्गमित्यावश्यकः सन्न्यासो मर्य्यादामार्गे। पुष्टि-

---

* यत्रेति ख।

† परामिति ख।

मार्गे त्वन्यैव व्यवस्था। न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहेति वाक्यात्।

परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

ऊर्द्धरेतःसु च ज्ञानोक्तेस्तस्य मुक्तिफलकत्वोक्तेः किं प्रजया करिष्यामो येषां नोयमात्मा नायं लोक* इत्यादिश्रुतेश्च ब्रह्मप्राप्तावेव सर्व्वस्याः श्रुतेस्तात्पर्य्यमिति सिध्यति। तस्या एव सर्व्वक्लेशापायपूर्व्वकपरमानन्दरूपत्वान्न तु कर्म्मणि। दुःखात्मकसंसारहेतुत्वात् तस्य। जीवश्रेयोनिमित्तमेव श्रुतिप्राकट्यात्। अन्यथा निषेधविधिर्नस्यात्। तथाच कर्म्मविधिनापि परम्परामोक्ष एव फलत्वेन परामृश्यत इति सिद्धान्तं† परामर्शं कर्म्मस्वातन्त्र्यवादी जैमिनिरपवदति बाधत इत्यर्थः। मोहकशास्त्रप्रवर्त्तकः स इतीश्वरमेव न मनुते यतोऽतस्तत्प्राप्तिस्तस्य मते दूरापास्ता। कर्म्मानधिकारिणामन्धादीनां सन्न्यासविधिविषयत्वमन्यथा वीरहा वा एष देवानां योऽग्निमुद्वासयत इति निषेधविधिर्न‡ स्यादतो ब्रह्मचर्य्यं समाप्य गृही भवेत् गृहाद्वनीभूत्वा प्रव्रजेद्यदिवेतरथा ब्रह्मचर्य्यादेव प्रव्रजेत् गृहाद्वनाद्वेति श्रुतेरप्यङ्गहीन एव स विषयो यत आयुर्भागविभागेनाश्रमाणां विधानं। तुरीये तस्मिन् देहेन्द्रियादिवैकल्यं नियतमतः कर्म्मण्येव श्रुतेस्तात्पर्य्यं। अपिच। ज्ञानकर्म्मणोरलौकिकफलसाधकत्वेन विहितत्वमेव प्रयोजकं। अपरोक्षब्रह्मज्ञानञ्च न विधेयं साक्षात् स्वकृत्य-

---

* नोयमात्मा अयं लोक इति वा।

† इति सिद्धं। न। इति ख।

‡ इति श्रुतिर्नस्यादिति ख।

साध्यत्वाच्चोदनाबोधकलिङ्गाद्यभावाच्च * ज्ञानस्य न मुक्तिसाधकत्वं वक्तुं शक्यं । य एवं विदुरित्यादिस्तु यागेष्विज्यविष्णुस्तुतिपरेत्याशयेनाह । अचोदना चेति । जैमिनिवत्तत्सहायभूतेयमचोदना च परामर्शमपवदतीति सम्बन्धः । तथाच विधिसम्बन्धात् कर्म्मैवानुष्ठेयं न तु मुक्तिसाधनमप्यतथात्वादिति स्थितं ।

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

बादरायण आचार्य्यो जैमिनेरपि गुरुस्तदेव कर्त्तव्यमिति शिष्यसम्मतमनुष्ठेयं कर्म्मापवदतीति पूर्व्वेण सम्बन्धः । तत्र हेतुः साम्यश्रुतेः । यथा वीरहा वा एष देवानामिति श्रुत्या कर्म्मत्यागकर्त्तुर्निन्दा श्रूयत एवमेव भगवत्ज्ञानरहितस्यापि सा श्रूयते यतः । तथाहि

असूर्य्या † नाम ते लोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्यापि ‡ गच्छन्त्यविद्वांसोऽबुधा जनाः ॥

एतदग्रे च ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्तीत्यादिरूपा । एतच्च निन्दामात्रेण साम्यमुक्तमापाततो वस्तुतस्तु

तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्य्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येनमेव§ प्रव्राजिनो

---

* लिङ्गाद्यभावाच्चेति ख ।

† असुर्य्या इति च क्वचित् दृश्यते ।

‡ प्रेत्याभिगच्छन्तीति वा पाठः ।

§ भवत्येतमेवेति वा पाठः ।

लोकमीप्सन्तः* प्रव्रजन्ति इति श्रुत्या ज्ञानसाधनत्वेनैवाश्रमकर्मकरणोक्तेश्च न स्वातन्त्र्यं कर्म्मणो वक्तुं शक्यं। अतएव शुकस्य न ब्रह्मचर्य्यादिकमपि फलस्य जातत्वेन तत्साधनानपेक्षणात् । न च स्वर्गकामपदश्रवणान्नैवमिति वाच्यं । त्वदभिमतलोकात्मकस्वर्गे यन्न दुःखेन संभिन्नमिति वाक्यशेषोक्तस्वर्गपदप्रवृत्तिनिमित्तधर्म्माभावादात्मसुखस्यैव तादृशत्वात् तस्यैव तत्रोक्तेः। एवं सति तमेतं वेदानुवचनेनेति† श्रुत्यैकवाक्यतापि सम्पद्यतेऽन्यथा तु विरोध एव। ननु दृष्टफलका अपि कारीरोचित्रादि यागाः श्रूयन्त इति नैवं निर्णय इति चेत्। उच्यते। नित्यकर्म्मणो हि ज्ञानसाधनत्वमुच्यते व्रीहिपश्वादीनां तन्निर्वाहकत्वात् तच्छेषत्वेन तेषां विधानं एवं सति वीरहेति श्रुतिः साग्निकस्य गृहिण आलस्यादिदोषेण तदुद्वासने दोषमाह नत्वाश्रमान्तरपरिग्रह इति मन्तव्यं। अन्यथा तदुच्छेदस्तद्विधिवैयर्थ्यञ्च स्यात्। न चानधिकृतमादाय तत्समाहितिरिति वाच्यं। अत्र पृच्छामोऽन्धपङ्ग्वादिभिः प्रव्रजनं कार्य्यमिति विधिरस्त्याहोस्वियावज्जीवमग्निहोत्रविधायकप्रव्रजनविधायक‡वाक्ययोर्विरोधाभावाय विषयो भिन्नः कल्प्यते। नाद्योऽश्रुतेः। न द्वितीयः यदहरेव विरजेदिति श्रुत्या वैराग्यवतः प्रव्रजनविधानात् तेनैव विषयभेदसिद्धौ तत्कल्पनानवकाशात्। तेन नापुत्रस्य लोकोऽस्तीति श्रुतिरप्यविद्वद्विषयिणीति न विरोधः।

---

* लोकमीचन्त इति वा पाठः।

† वचनेति ख।

‡ वाक्यप्रवर्त्तनविधायक इति ख।

विद्वांसः प्रजा न कामयन्त इति श्रुतेः। एतेनर्णत्रयापाकरण-मपि प्रत्युक्तं वेदितव्यं अविद्वद्विषयत्वात्।

यदप्युक्तमचोदना चेति सूत्रावयवेन चोदनाबोधकलिङ्गाद्य-भावो बाधक * इति। तदपि न साधीयः। श्रुतिसाम्यादेव। श्रूयते हि तस्मादेवंविच्छान्तोदान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येदिति। न च प्रमाणवस्तुपरतन्त्रत्वान्न ज्ञानस्य विधेयतेति वाच्यं। इतरज्ञानस्य † तथात्वेऽपि जीवा-त्मलक्षणेऽधिष्ठाने परमात्मनो भगवतो दर्शनस्यान्यतोऽप्राप्तत्वात्। श्रवणान्तसाधनैस्तद्दर्शने स्वरूपयोग्यतासम्पत्तावात्मन्यधिष्ठाने परमात्मदर्शनानुकूलप्रयत्नविधानसम्भवाच्छ्रवणविधिना श्रुति-वाक्यजशाब्दज्ञानानुकूलप्रयत्नविधानवत्। एवमेव हि याग-विधिनापि क्रियारूपयागस्य स्वानुकूलप्रयत्नाधीनत्वेन स प्रयत्न-एव विधीयतेऽन्याप्राप्तत्वान्न तु क्रियातत्प्रयत्ने सति तस्याः स्वतएव सम्भवात्। अथवा। ननु यथा वीरहेति श्रुत्या कर्म-त्यागी निन्द्यते तथैवासूर्य्या नाम ते लोका अन्धेन तमसा वृताः। तांस्ते प्रेत्यापि गच्छन्त्यविद्वांसोऽबुधा जनाः। ये तद्विदुर-मृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ती‡त्यादि श्रुत्या भगवत्-ज्ञानाभावो निन्द्यते। एवं सति कर्मज्ञानानुकूलप्रयत्नयोर्विधे-यत्वे मिथो विरोधादधिकारिभेदेन विधेयत्वं वाच्यं। न च तावत्कर्म्माणि कुर्व्वीत न निर्विद्येत यावतेति भगवद्वाक्याद्-

---

* बोधक इति खं।

† इतरज्ञानस्य तस्य तथात्वेपीति खं।

‡ दुःखमेवापियन्ति इति वा पाठः।

रागिणः कर्म विधीयते तद्रहितस्य ज्ञानमिति वाच्यं । जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेज इति श्रुतेर्नीरागत्वेन प्रसिद्धस्यापि तस्य कर्मणि प्रवृत्तिर्या सा न स्यादधिकाराभावात् । अथ जनकदृष्टान्तेन कर्मणोऽङ्गित्वं ज्ञानस्य तदङ्गत्वं वाच्यं । तथाच ज्ञानवता कर्मानुष्ठेयमिति प्राप्तं * प्रतिवदति । अनुष्ठेयं बादरायणः साम्यश्रुतेः । ज्ञानमङ्गं तदङ्गित्वेनानुष्ठेयं कर्मेति मतं बादरायणोऽपवदतीति पूर्व्वेण सम्बन्धः । तत्र हेतुमाह साम्यश्रुतेरिति । स्वतोऽपुरुषार्थं कर्म फलार्थिनैवानुष्ठेयं । तथाचैष नित्यो महिमेति श्रुत्या ज्ञानवति विहितनिषिद्धयोः कर्मणोः फलाजनकत्वेन साम्यं श्रूयत इति फलार्थिप्रवृत्त्यसम्भवेन ज्ञानिनस्तथात्वाभावेन कर्मोच्छेदप्रसक्त्या न ज्ञानस्याङ्गत्वं वक्तुं शक्यं । कृषीवलस्य व्रीहीणां वपने भर्ज्जनस्येव । तथाच ज्ञानिनः प्रवृत्त्यसम्भवेनान्येषां चार्थितरे दुःखमेवोपयन्तीति निन्दाश्रवणेन तथात्वात् सर्व्वार्थतत्त्वज्ञा श्रुतिर्ज्ञानबहिर्भूतं कर्म कथं विदध्यादिति ज्ञानस्य पुरुषार्थासाधकत्वोक्तिमसहमानेनाचार्य्येण प्रौढ्या निरूपितं । एवं सति पूर्व्वकाण्डवैयर्थ्यमापततीति तत्तात्पर्य्यमाह ।

## विधिर्व्वा धारणवत् ॥ २० ॥

यथा योगशास्त्रे मनःसमाधेरेव साध्यत्वात् तत्साधनत्वेनैव मानस्या मूर्त्तेर्धारणं विधीयते न तु स्वतन्त्रतया फलसाधकत्वेन मनःसमाधौ तत्त्यागात्† । ततः किञ्चन न स्मरेत् । तत्रापि चित्त-

---

* प्राप्तौ प्रतिवदति इति खं ।

† मनःसमाधौ तत्त्यागादिति खं ।

वेन मुनिर्भवतीत्येकत्वं तद्विदि न वदेदतो ज्ञानं कस्यचिदेकस्य भवतीति ज्ञानस्य दुर्लभत्वं ज्ञाप्यते।

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥

इति भगवद्वाक्याच्च। तर्हि वेदानुवचनादिषु निःशङ्का प्रवृत्तिः कथं इत्थं। स वा अयमात्मेत्यादिकया पूर्व्वश्रुत्या भगवन्माहात्म्यं श्रुत्वा यथाकथञ्चित् तद्वेदनौत्सुक्ये सति सत्सङ्गाभावेन भक्तिमार्गापरिचयात् कर्ममार्गमात्रमाश्रमधर्मत्वेनालौकिकार्थसाधकत्वेनापि पूर्व्वं ज्ञातमस्तीति तदेव भगवद्वेदनेऽपि साधनमिति मन्यमानास्तदेव कुर्व्वन्ति। ननु वैदिकसाधनानां वैयर्थ्यं कथमिति चेत्। न। भ्रमकृतत्वेऽपि जन्मान्तरीयाक्षरज्ञानोपयोगिसंस्काराधायकत्वेनावैयर्थ्यात्।

स्तुतिमात्रमुपादानादिति चेन्नापूर्व्वत्वात्॥ २१॥

ननु साम्यश्रुतेर्हेतोः कर्मशेषत्वं ज्ञानस्य यदपास्तं तन्नोपपद्यते। साम्योक्तेर्ज्ञानस्तुतिरूपत्वात्। अपिच। तथा ज्ञानिनोऽपि कर्मोपादानात् कर्मकृतिस्वीकारादिति यावत्। अन्यथा ज्ञानिनां कर्मकृत्यभावेन तत्कृतगुणदोषाप्रसक्त्या तन्निषेधानुपपत्तिः स्यात्। तेषामपि तत्कृतगुणदोषसम्बन्धोऽस्त्येवेति ज्ञापनाय मात्रपदं निषेधेनेतरसाधारण्यं परिक्रियते। तथाच ज्ञानिनोऽपि कर्मकरणात् कर्मशेषत्वं ज्ञानस्य निःप्रत्यूहमिति चेन्नैवं वक्तुं युक्तं। यद्ज्ञानस्य कर्मफलासम्बन्धफलकत्वस्यापूर्व्वत्वाद्विधेयत्वमेव। न हि यस्य कर्मणो ज्ञानस्य वा यत्फलं तदुक्तिरपि

स्तुतिरेवेति युक्तं। तयोरुच्छेदापत्तेः। विधिर्हि प्रवर्त्तकः। तस्य पुरुषप्रवृत्त्युपयोग्यर्थकथनेनैव चारितार्थ्यादन्यार्थकथनस्य स्तुतित्वमस्तु नाम। नह्येवं प्रकृते। मुमुक्षोः कर्मबन्धाभावप्रेप्सो-स्तत्साधनत्वज्ञानएव प्रवृत्तिसम्भवात्। यच्च कर्मफलसम्बन्ध-निषेधानुपपत्त्या कर्मसम्बन्ध इत्युक्तं तन्न साधीयः। न हि तरणौ तमःकार्य्याभाव इत्युक्ते तत्प्राप्तिरपि सम्भवति।

अथवा। पुरुषोत्तमज्ञान*मुख्यफलस्यातिमहत्त्वेन साक्षात् वक्तुमशक्यत्वं ज्ञापयन्ती कैमुतिकन्यायेन परम्परया तदाहानयर्चा†। तं विदित्वा ब्राह्मणो भवतीति श्रुतेर्ब्राह्मणपदेन ब्रह्म-विदुच्यते। तथा चाद्यपदेन बुद्धिस्थब्राह्मणमाहात्म्योद्देशे कृते स क‡ इत्याकाङ्क्षायामाह तं ब्राह्मणं विदित्वा विहितनिषिद्ध-फलासम्बन्धी भवतीति लक्षण इत्यर्थः साक्षाद्भगवद्विदः किमु वाच्यमिति भावः। अतस्तस्यैव तच्छब्दस्य पूर्व्वपरामर्शित्वाद् ब्राह्मणस्यैव भगवद्विदो भक्तस्यैव पदवित्स्यात् तज्ज्ञानानुकूल-प्रयत्नवान् स्यात् तद्भजेतेति यावत्। तथाच§ यत्र भगवद्विष-यकज्ञानस्याप्युक्तरीत्या न कर्मशेषत्वं वक्तुं शक्यं तत्र भगवज्-ज्ञानस्य तथात्वं दूरतर¶मिति सर्व्वं सुस्थं।||

---

* ज्ञानफलस्येति खं।

† चनयार्चा इति खं।

‡ स च इति खं।

§ यथाचेति खं।

¶ दूरदूरतरं इति खं।

|| स्तुतिमात्रमुपादानात् इत्यस्य सूत्रस्यानन्तरमेव भगवता भाष्यकारेण भाव-शब्दाच्च इति सूत्रं गृहीतं वल्लभाचार्य्येण तु तत् परिहृतं।

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २२ ॥

अथ प्रकारान्तरेण शङ्कते। भृगुर्वै वारुणिः वरुणं पितरमुपससार। अधीहि भगव* इति होपससाद† सनत्कुमारं नारदः। प्रतर्दनो हवै दैवोदासिरिन्द्रस्य प्रियं धामोपजगामित्याद्युपाख्यानैर्हि ब्रह्मविद्या निरूप्यते। सर्व्वाण्याख्यानानि पारिप्लवे शंसतीति श्रुत्या शंसनशेषत्वं तेषामवगम्यते। शंसने शब्दमात्रस्य प्राधान्येनार्थज्ञानस्य तथात्वादुपदेशान्ताख्यानप्रतिपाद्यं ज्ञानं मन्त्रार्थवदप्रयोजकमिति कर्मशेषत्वमपि न वक्तुं शक्यं। प्राधान्यन्तु दूरापास्तं। धर्मिण एवासिद्धेरित्याह‡ पारिप्लवार्था इति। उक्तरीत्या सर्व्वा उपाख्यानश्रुतयः कर्मशेषभूता इत्यर्थः। अत्राचार्य्य एवमपि कर्मशेषत्वं ज्ञानस्य न सम्भवतीत्याह। नेति। कुतः। विशेषितत्वात्। कर्मणः सकाशात् ज्ञानं विशेषितमधिकधर्मविशिष्टत्वेनोक्तमिति न ज्ञानस्य कर्मशेषत्वमित्यर्थः। ननु विशेषितत्वमाख्यानेष्वेवेत्यप्रयोजको हेतुरिति चेत्। मैवं। आचार्य्याशयानवगमात्। तथाहि। पूर्व्वन्तुष्यतु दुर्जन इति न्यायेनाख्यानानां शंसनशेषित्व-§ मुपेत्योच्यते। नह्याख्यानेष्वेव ज्ञानं निरूप्यते किन्त्वन्यत्रापि। तथाहि। तैत्तिरीयके पठ्यते ब्रह्मविदाप्नोति परन्तदेषाभ्युक्ता सत्यं ज्ञानमनन्तं ब्रह्मेत्युपक्रम्य माहात्म्यविशेषज्ञानार्थं-

---

* भगवत इति ख ।

† होपाससादेति ख ।

‡ वसिद्धिः इति ख ।

§ शंसनशेषत्वमुपेत्यित्वा इति ख ।

माकाशादिकर्त्तृत्वमुक्त्वानन्दमयत्वं रसरूपत्वमप्युक्त्वा*भीषास्मादित्यादिना सर्व्वनियामकत्वञ्चोक्त्वा भगवानेव पूर्णानन्द इति ज्ञापनायानन्दगणनां कृत्वानन्दमयं पुरुषोत्तमं प्राप्तेनानुभूयमानानन्दस्वरूपं यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेत्यादिनोक्त्वा तद्विदो माहात्म्यमुच्यते। एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापकरवमिति। अत्र ज्ञानवान् सच्चिद्रूपं देशकालापरिच्छिन्नं सर्व्वकर्त्तारं निरवध्यानन्दात्मकं सर्व्वनियामकं मनोवागगोचरं पुरुषोत्तमं प्राप्नोति। कर्म्म तु स्वयं क्लेशात्मकं तद्वांस्तस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतेः क्षुद्रतरानन्दजनकस्वर्गपश्वादिफलमाप्नोति विहितनिषिद्धकर्म्मणोश्चाप्रयोजकत्वं तस्मिन्नुच्यत इति कर्म्मणः सकाशात् ज्ञानस्य निरवधिरेव विशेष उच्यत इति न धर्म्मसिद्धिर्नैवा कर्म्मशेषत्वं ज्ञानस्य सिद्ध्यति। तथाप्याख्यानप्रतिपादितविद्यानामसिद्धिरेवेति चेत् तत्राह।

**तथाचैकवाक्यतोपबन्धात् ॥ २३ ॥**

यथा केवलश्रुतेर्विद्याप्राधान्यं तथैवोपाख्यानश्रुतीनामित्यर्थः। चकारेण प्रश्नोत्तरैर्निर्णीतार्थप्रतिपादनं। महतामेवात्र प्रवृत्तिः सापि बह्वायासपूर्व्विकेति विद्यामाहात्म्यज्ञापनं प्ररोचनञ्चाधिकमुपाख्यानानामुपाख्यानं विनैव विद्यानिरूपिकायाः श्रुतेः सकाशादित्युच्यते। तत्र हेतुरेकवाक्यतोपबन्धादिति। आचार्य्यवान् पुरुषोवेदेति श्रुत्यैकवाक्यताज्ञानमाख्यानं

* रसस्वरूपत्वमुक्त्वा इति ख ।

विना न भवतीति तदर्थमुपबन्धात् गुरुशिष्यकथोपबन्धा-
दित्यर्थः। अथवोपाख्यानरहितायां श्रुतौ यथा ज्ञानं निरूप्यते
तथैवाधीहि भगव इति होपससाद सनत्कुमारं नारद इत्या-
द्याख्यानेष्वपि निरूप्यते इत्यनाख्यानश्रुत्यैकवाक्यतयैवाख्याने
ज्ञानस्वरूपोपबन्धात् प्रतिपादनादित्यर्थः। नैकट्यवाचिनोप-
पदेन * वस्तु प्रतीयात् तत्तत्गुरुस्तत्तच्छिष्यकथातत्सामीप्य-
मत्रोच्यतेऽन्यथा सामीप्यासम्भवादतः कल्पितत्वशङ्कानिरासः †
नन्वेवमपि पारिप्लवार्थत्वेन बाधकं ‡ पश्याम इति चेत्।
उच्यते। अश्वमेधप्रकरणे मनुर्वैवस्वतो राजेत्यादीन्याख्यानानि
यत्र पठितानि तत्र सामान्यतस्तेषां विनियोगः सर्व्वाण्याख्या-
नानि पारिप्लवे शंसतीत्यनेनोक्त इति सर्व्वशब्दस्तदाख्यानपर
एव नत्वाख्यानान्तरपरोऽपि प्रकरणस्य नियामकत्वात्। एवं
सति यदा पारिप्लवाख्यकर्मप्रस्तावस्तदा विशेषविनियोग उक्तः
पारिप्लवमाचक्षीतेति। तत्र प्रथमेऽहनि मनुर्वैवस्वतो राजेति
द्वितीयेऽहनीन्द्रोवैवस्वत इति तृतीयेऽहनि यमो वैवस्वतोराजे-
त्याख्यानविशेषा § वाक्यशेषे विनियुज्यन्ते। आख्यानसामान्य-
परत्वे तद्दोविशेषउपाख्यानविशेषविधानं न स्यात्। अतएव
पारिप्लवमित्येकवचनमतोनाख्यानान्तरगन्धसम्बन्धोऽपि। प्रापका-
भावात्।

---

* उपदेशेनेति ख'।

† कल्पितत्वं शङ्कानिरासं इति ख'।

‡ बोधकमिति पुस्तकान्तरे दृश्यते।

§ इत्याद्याख्यानविशेषा इति ख'।

## अतएवाग्नीन्धनाद्यनपेक्षा * ॥ २४ ॥

एवं पुरुषार्थोऽतःशब्दादित्युपक्रम्य ज्ञानस्य फलसाधने कर्मानपेक्षत्वमुपपाद्य तत्रैवोपपत्त्यन्तरमाह। यतो ज्ञानी ज्ञानेन स्वयमेव यज्ञात्मको जातोऽतएव जरामर्य्याग्निहोत्रेऽग्निस्तदिन्धनं समिदादि। तदादय आज्यादयस्तेषामनपेक्षोक्ता श्रुतौ। तैत्तिरीयके पठ्यते। तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरोवेदिर्लोमानि वर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निरित्यादि। एतेन यदन्यस्य यज्ञतासम्पादकं तस्य स्वकार्य्यसाधने कथं यज्ञापेक्षा भवेदिति भावः सूच्यते।

## सर्व्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २५ ॥

उक्तन्यायेन ज्ञानं प्रति कर्मणः फलोपकारित्वाभावेऽपि स्वरूपोपकारित्वमस्ति न वेति चिन्त्यते। तत्र नेति पूर्व्वः पक्षः। गुरूपसत्तितदुपदेशैरेव तत्सम्भवादाचार्य्यवान् पुरुषो वेदेति श्रुतेः। अत्र सिद्धान्तमाह। सर्व्वापेक्षेति। सर्व्वेषां कर्मज्ञानभक्तीनां पुरुषोत्तमज्ञानोत्पत्तावस्त्यपेक्षा। अत्र प्रमाणमाह। यज्ञादिश्रुतेरिति। यज्ञादिनिरूपिका श्रुतिरेव प्रमाणं यत इत्यर्थः। इदमत्राकूतं। पुरुषोत्तमएव स्वतन्त्रपुरुषार्थरूपस्तत्प्राप्तिरेव फलं†। तत्र प्रेमभक्तिजं तज्ज्ञानमेव साधनमिति

---

* अतएव चाग्नीन्धनाद्यनपेक्षा इति पुस्तकान्तरसम्मतः पाठः।

† तत्प्राप्तिरेषां फलं इति ख।

ब्रह्मविदाप्नोति परमित्यादि श्रुतिसहस्रैश्च * प्रतिपाद्यते। अथे-तरे दुःखमेवोपयन्तीति श्रुत्या ज्ञानरहितानां दुःखमात्रप्राप्ति-रुच्यते। एवं सति स्वतोऽपुरुषार्थरूपं यज्ञादिकं सर्व्वार्थतत्त्व-प्रतिपादिका श्रुतिर्यन्निरूपयति तत् सर्व्वथा पुरुषार्थसाधन-त्वेनैवेति मन्तव्यं। तच्च निःकामतयैव कृतं तथा। अतएव वाजसनेयिशाखायां यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापी भवतीत्युपक्रम्य पठ्यते तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्मण इति कामयमानोऽथा-कामयमानोयो कामो निःकाम आत्मकाम आप्तकामो भवति तस्मात् † प्राणा उत्क्रामन्त्य‡त्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्मा-प्येतीत्यादि। अथाकामयमानः § कर्त्ता निरूप्यत इति शेषः। यः पुमान् ¶ कर्मकृतावकामस्ततो निःकामः सन्नात्मकामो निरु-पधिस्नेहवान् प्रभौ ‖ ततो भगवत्प्राप्त्याप्तकामो भवतीत्यर्थः। अत्र यथाकारीत्यादिना कर्मकर्त्तुरेवोपक्रमादथाकामयमान इत्यने-नापि तथाभूतः सएवोच्यते। एवं सति सत्कर्म्मप्रवृत्त्यर्थं विविधफलानि ** स्वयमेवोक्त्वा जनान् भ्रामितवानिति स्वोक्त-

---

* य एतद्विदुरमृतास्ते भवन्तीत्यादि श्रुतिसहस्रैरिति वा पाठः।

† न तस्मादिति ख।

‡ उत्क्रामतीति ख।

§ अत यथा कामयमान इति ख।

¶ कः पुमान इति ख।

‖ वशौ इति ख।

** विफलानीति ख।

करणान्तरेण दयया निःकामं करोति। सकामतयापि क्रियमाणे-
नैव वैदिककर्मणानेकजन्मभिः संस्कारविशेषप्रचयेनापि तथा।
काषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तत इत्यादि स्मृतिभ्यश्च
ज्ञानोत्पत्तौ कर्म्मापेक्षास्तीति चकारेण पुष्टावङ्गीकृतस्य सर्व्वा-
नपेक्षेति सा समुच्चीयते। अतएव नायमात्मेत्यादि श्रुतिर्न विरु-
ध्यते। ननु ज्ञानद्वारा कर्म्मादीनामेव फलसाधकत्वमस्त्विति शङ्का
निरासाय दृष्टान्तमाहाश्ववदिति। यथा स्वेष्टफलसाधकदेश-
व्यवधानात्मकदेशातिक्रमेऽश्वस्य साधनत्वं न तु तत्र फलसिद्धा-
वपि तथा आधिभौतिकाध्यात्मिकाधिदैविकप्रतिबन्धनिवृत्तावेव
तेषां साधनत्वं न तु भगवत्प्राप्तावपीत्यर्थः। इदञ्च मुमुक्षुभक्त-
विषयकमिति ज्ञेयं। आत्यन्तिकभक्तिमतां भक्तीतरानपेक्षणात्।

## शमदमाद्युपेतः स्यात् तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात्॥ २६॥

ननु तस्मादेवंविच्छान्तोदान्त इत्यादिना शमादेरेव ज्ञान-
साधनत्वमुच्यते न यज्ञादेरिति चेत् तत्राह। शमदमाद्युपेतो
भक्तिमार्गेऽपि स्यादेव यद्यपि तथापि तदङ्गतया आत्मन्येवा-
त्मानं पश्येदिति ज्ञानमार्गीयज्ञानाङ्गतयैव शमादिविधेर्हेतो-
र्ज्ञानमार्गे तेषामवश्यानुष्ठेयत्वात् तथाविधिरित्यर्थः। भक्तिमार्गे
स्वतएव शमादीनां सम्भवेऽप्यावश्यकत्वं न तेषामिति भावः।

## सर्व्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्॥ २७॥

ननु सत्वशोधकत्वेन यच्छमदमादेर्विधानमिति मतन्नोप-
पद्यते। आहारशुद्धौ सत्त्वशुद्धिरिति श्रुतेस्तद्विरुद्धा सर्व्वान्न-
भक्षणानुमतिरपि यतः श्रूयते छन्दोगानां। न हवा एवंविदि-

किञ्चनानन्नं भवति। तथा वाजसनेयिनां न ह वा अस्यानन्नं जग्धं भवतीत्यादि। तस्मात् सत्त्वशुद्ध्यर्थं यत्नादेनं विधानमिति प्राप्ते विषयव्यवस्थामाह। आहारदौर्वल्येन * प्राणात्यय उपस्थिते प्राणधारणस्य ज्ञानान्तरङ्गतमसाधनत्वेनाहारस्य देहपोषकत्वेन ततो वहिरङ्गत्वात् † तदनुमतिः क्रियत इत्यर्थः। अत्र प्रमाणमाह तद्दर्शनादिति। चाक्रायणः ‡ किलर्षिरापद्गत इभ्येन सामिखादितान् कुल्माषांश्चखादेत्यादि श्रुतेर्दर्शना§दित्यर्थः। यद्यपि ज्ञानसाधनत्वेन सत्त्वशुद्धेरपेक्षितत्वाज्जाते ज्ञाने तत्साधनानपेक्षणादेवंविदीति वचनात् तादृशे सार्व्वदिक्यपि तदनुमति र्नानुचिता। अपि स्मर्य्यत इत्यनेनाविदुषोऽप्यनुमतेर्वक्ष्यमाणत्वाच्च। तथाप्याचार्य्येणावस्थाविशेषविषयकत्वमुक्तं यत्तेन ज्ञानिनोऽप्यनापदि विहितत्यागोऽविहितकरणञ्च चित्तमालिन्यजननेन ज्ञानतिरोधायकमिति श्रुत्यभिमतमिति ज्ञाप्यते। अतएव श्रीभागवते द्वितीयस्कन्धे

विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितं
सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयं।
ऋषे विदन्ति¶ मुनयः प्रशान्तात्मेन्द्रियाशयाः
यदा तदेवासत्तर्कैस्तिरोभूयेत विप्लुतं॥

इति ब्रह्मणोक्तं।

---

* दौर्व्बल्येनेति वा पाठः।

† वहिरङ्गादिति वा पाठः।

‡ चांक्रायण इत्यपि दृश्यते।

§ श्रुतिदर्शनादिति खं।

¶ ऋषेर्विदन्तीति खं।

ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।
बलादाकृष्य मोहाय महामाया प्रयच्छति ॥

इति मार्कण्डेयेनाप्युक्तं। एषा ज्ञानमार्गीयज्ञानवतो व्यवस्थेति ज्ञेयं। भक्तिमार्गीयस्यैवमापदसम्भवात्।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहं ॥

इति भगवद्वाक्यात्। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इत्यत्रैवकारेण पुरुषोत्तमज्ञानवतएव मायातरणोक्तेरक्षरज्ञात*ज्ञानवतां तथात्वमुचितं।

## अबाधाच्च ॥ २८ ॥

आपदि तथान्नभक्षणेन ज्ञाने चित्ताशुद्ध्यसम्भवेन तज्जनितप्रतिबन्धाभावाच्च न दोष इत्यर्थः।

## अपि च स्मर्य्यते ॥ २९ ॥

आपद्यविदुषोऽपि दुष्टान्नभक्षणे पापाभावो यत्र स्मर्य्यते तत्र विदुषि स्वत्यनुमते का शङ्केत्यर्थः। स्मृतिस्तु

जीवितात्ययमापन्नोयोऽन्नमत्ति यतस्ततः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ इति

अथवा विदुषो दुष्टकर्म्मासम्बन्धो ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथेति स्मर्य्यतेऽपीत्यर्थः।

## शब्दश्चातोऽकामकारे ॥ ३० ॥

यतो ज्ञानाग्निरेव सर्व्वकर्म्मदहनसमर्थं इति फलदशायां

* अक्षरमात्र ज्ञानवतां इति ख ।

कर्म्मकारेऽपि* न दोषोऽतएव साधनदशायां तदभावेन तस्मादेवं विच्छान्तोदान्त उपरतस्तितिक्षुरित्यादिरूपः शब्दः कामकार-निवर्त्तकः श्रूयत इत्यर्थः । एवं ज्ञानस्य कर्म्मनाशकत्वे सिद्धे जातज्ञानस्याश्रमकर्म्म कर्त्तव्यं नवेति चिन्त्यते । तत्र फलस्य जातत्वाज्ज्ञातस्यापि नाश्यत्वेनाप्रयोजकत्वान्न कर्त्तव्यमिति पूर्व्वः†-पक्षस्तत्र सिद्धान्तमाह ।

विहितत्वाच्चाश्रमकर्म्मापि ॥ ३१ ॥

यथा ज्ञानिनाप्यनापदि शिष्टानामेवान्नं भक्षणीयं विहितत्वात् तथाऽश्रमकर्म्मापि कर्त्तव्यमेव नित्यं विहितत्वादित्यर्थः । यथाऽनापद्यशिष्टान्नभक्षणं दोषाय निषिद्धत्वादेतच्चोपपादितं सर्व्वान्नानुमतिरित्यत्र तथा नित्यत्यागोऽपि‡ प्रत्यवायजनक इति तत् कर्त्तव्यमेवेति भावः । यच्चोक्तं ज्ञातस्यापि नाश्यत्वेना-प्रयोजकत्वान्न कर्त्तव्यमिति तत्राह ।

सहकारित्वेन च ॥ ३२ ॥

शमदमादीनामन्तरङ्गसाधनानां सहकारीण्याश्रमकर्म्माणीत्येतद्दृढिता: शमादिभिरपि ज्ञानं न स्थिरीकर्त्तुं शक्यमिति तानि कर्त्तव्यान्येवेत्यर्थः । संसारवासनाजनकत्वस्वभावोयः कर्म्मणां स ज्ञानेन नाश्यत इति न सहकारित्वेऽनुपपत्तिः काचिदिति भावः । एवं ज्ञानमार्गीयज्ञानस्थैर्य्यसाधनमुक्ता भक्तिमार्गीयसाधनानां भगवच्छ्रवणादीनामित आधिक्यमावश्यकताञ्चाह ।

---

* कामकारेऽपीति ख ।

† पूर्व्वपक्ष इति ख ।

‡ तथा तत्त्यागोऽपि इति ख ।

## सर्व्वथापि तएवोभयलिङ्गात् ॥ ३२ ॥

भगवच्छ्रवणकीर्त्तनादयः साधनान्तरवद्विहितत्वेन कर्त्तव्या एव यद्यपि तथापि सर्व्वथापि अन्येषां युगपदुपस्थितौ तदनुरोधमकृत्वापि तएव भगवद्धर्माएव कर्त्तव्या इत्यर्थः। कुतः श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च । श्रुतिलिङ्गन्तु

तमेव धीरो विज्ञाय प्रज्ञां कुर्व्वीत ब्राह्मणः * ।

नानुध्यायात् † बहूञ्छब्दान् वाचोविग्लापनं हि तत् । इति

तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथा‡मृतस्यैष सेतुरित्यपि। अत्रैवकारेण भगवदतिरिक्तं प्रतिषिध्य तद्विषयकज्ञानानुकूलं प्रयत्नं श्रवणात्मकं विज्ञायेति विधाय स्मरणमपि तन्मात्रविषयकमेव प्रज्ञां कुर्व्वीतेति वचनेन विधाय तदेकनिष्ठताहेतुभूतानामेव शब्दानामावर्त्तनमर्थानुसन्धानमपि कर्त्तव्यं नान्येषामिति नानुध्यायाद्बहूनित्यनेनोक्तवती। अत्रान्वित्युपसर्गेण ध्यानस्य पश्चाद्भावित्वमुच्यते। तेन योग्यतया श्रवणकीर्त्तने एव तत्पूर्व्वभाविनी प्राप्येते। स्मृतिस्तु

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः ।
तएव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजं ॥ इति

---

* ब्रह्मण इति ख ।

† नान्वध्यायात् इति ख ।

‡ मुञ्चथ इति वा पाठः ।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययं ॥
सततं कीर्त्तयन्तो मां यतन्तश्च दृढ़व्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ इति

एतेन भगवद्धर्माणामात्मधर्मत्वेनान्तरङ्गत्वादाश्रमकर्मणो देह-धर्मत्वेन वहिरङ्गत्वात् तदविरोधेनैव तत्कर्त्तव्यमिति स्थितं । अतएव भगवद्धर्मान्यधर्मं प्रतिषिध्य तेषां सर्व्वेभ्य आधिक्यं ज्ञापयितुं स वा अयमात्मा सर्व्वस्य वशीत्यादिना भगवन्माहात्म्यमुक्तं ।

अनभिभवञ्च * दर्शयति ॥ ३४ ॥

प्राधान्येन भगवद्धर्माएव कर्त्तव्या इत्यत्रोपोद्बलकान्तरमनेनोच्यते सर्व्वं पाप्मानन्तरति नैनं पाप्मा तरति सर्व्वं † पाप्मानं तपति नैनं पाप्मा तपतीत्यादिना भगवद्धर्मानुरोधेनाश्रमकर्म्माकरणजदोषैरनभिभवञ्च श्रुतिर्दर्शयत्यतो भगवद्धर्माएव सर्व्वेभ्य उत्तमा ‡ इत्यर्थः ।

अन्तरा चापितु तद्दृष्टेः ॥ ३५ ॥

भगवद्धर्मेभ्य आश्रमधर्मा हीना इत्यप्यल्पमुच्यतेऽपि तु तस्मिन् पुरुषोत्तमे धर्म्मिण्येव दृष्टिस्तात्पर्य्यं यस्य पुंसस्तस्याश्रमधर्मा अन्तरा च । फलसिद्धौ व्यवधानरूपाश्चेति § श्रुतिर्दर्शयतीति पूर्व्वेण

* अनभिभवत्वञ्चेति वा पाठः।
† सर्व्वं पाप्मानं इति न दृश्यते ।
‡ उत्तमानि साधनानीति ख' ।
§ व्यवधानरूपाश्चेति ख' ।

सम्बन्धः । अन्तरा शब्दोऽनाव्ययात्मको व्यवधानवाचकः । तथाच श्रुतिः एतद्ध स्म वै* ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषान्नोऽयमात्मायं लोक इति ऋणापाकरणहेतुत्वेन लौकिकोत्कर्षहेतुत्वेनापि प्रजाया अभीष्टत्वेऽपि तदुत्पादनव्यासङ्गेन भगवदानन्दानुभवेऽन्तरायो भविष्यतीति तदृष्ट्या तत्रोपेक्षां दर्शयति ।

## अपि च स्मर्य्यते ॥ ३६ ॥

अपि शब्देनाश्रमधर्म्माणां तथात्वं किमु वाच्यं । यतो ज्ञानतत्साधनवैराग्यादीनामप्यन्तरारूपत्वं स्मर्य्यते ।

> तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
> न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ॥

इति भगवद्वाक्यं ।

## विशेषानुग्रहश्च ॥ ३७ ॥

स्मर्य्यत इति पूर्व्वेण सम्बन्धः । ज्ञानादेः सकाशाद्भक्तिमार्गे फलतोऽप्युत्कर्षमाह । ज्ञानादिसाधनवत्स्वनुग्रहो मुक्तिपर्य्यन्त एव भक्तिमार्गे त्वहं भक्तपराधीनोह्यस्वतन्त्र इव द्विजेत्यादिवाक्यैर्विशेषरूपो मुक्त्यादिभ्योऽपि भक्तानां व्यावर्त्तको भगवदनुग्रहः स्मर्य्यत इत्यर्थः । गूढ़ाभिसन्धिमुद्घाटयन् फलितमर्थमाह ।

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३८ ॥

अत इति पूर्व्वोक्तश्रुतिस्मृतिपरामर्शः । तथा चेतरस्या मुक्तेरपि भक्तिमार्गीयतदीयत्वमेव ज्याय इत्यर्थः । अत्र हेत्वन्तर-

---

* तत् पूर्व्वे ब्राह्मणाः इति वा पाठः ।

माह लिङ्गाच्चेति। मुक्तानान्तु मायाविनिर्मुक्तमात्मस्वरूपमेव न तु देहेन्द्रियादिकमप्यस्ति येन भजनानन्दानुभवः स्याद्भक्तानान्तु देहेन्द्रियादिकमपि मायातत्कार्य्यरहितत्वेनानन्दरूपत्वेन च भगवदुपयोग्यतोऽपि तत्तथेत्यर्थः। न हि मुक्तात्मनां कश्चन भगवदुपयोगोऽस्तीति भावः। तदुक्तं श्रीभागवते। न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्च्चिता इत्यादिमुक्तोपसृप्यत्वञ्चोच्यते। अतएव सप्तमस्कन्धे देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामित्युक्तं। पुरवासित्वे देहादेरावश्यकत्वान्निषेधो जड़ात्मकानामेवेत्यवगम्यते। इतरत् ज्याय इति पाठे तु पूर्व्वोक्ताश्रमकर्मपरामर्शोऽत इत्यनेन। उक्तयोरेव वा। एतेन सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेति श्रुत्युक्तफलवत्त्वं* तस्य सूच्यते।

## तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमा-
## तद्रूपाभावेभ्यः ॥ ३९ ॥

अथेदं विचार्य्यते। तदीयानामपि कदाचित् सायुज्यमस्ति नवेति। तत्र भक्तिमार्गस्यापि साधनरूपत्वात् तस्य च मुक्तावेव पर्य्यवसानात् तदीयत्वस्य साधनावस्थायामुत्कृष्टावस्थारूपत्वात् तेषामपि मुक्तिरावश्यकी। तथाच कर्मफलतो† न कश्चिद्विशेष इति प्राप्त उच्यते तद्भूतस्येत्यादि। तु शब्देन मर्य्यादामार्गीयव्यवच्छेदः। अत्र विश्वासदार्ढ्यायाहान्यस्य का वार्त्ता कर्ममात्रनिरूपकस्य जैमिनेरपि यदि कदाचित् भग-

---

* उक्तफलवत्त्वमिति ख।

† तथाच फलत इति ख।

वत्कृपयाऽयं भावी भवेत्तदा तद्गतस्य पुष्टिमार्गीयस्य * भगवद्भावं प्राप्तस्य तस्यापि नातद्भाव उक्तभावतिरोधानं न कदाचिदपीत्यर्थः। अत्र हेतूनाह। नियमादीन्। तैत्तिरीयके ते ते धामान्युश्मसीति मन्त्रे। यत्र भूरिशृङ्गा अयासस्तदुरुगायस्य परमं पदमित्युक्त्वा तदनन्तरं तत्र कृतानि कर्माण्यपि विष्णोः कर्माणि पश्यतेति मन्त्रेण निरूप्य पुनः पूर्वोक्तलीलास्थानं तद्विष्णोः परमं पदमिति पदेनानूद्य तस्य नित्यत्वनिरूपणायोच्यते सदा पश्यन्ति सूरय इति। सूरयो विद्वांसः पुरुषोत्तमज्ञानवन्त इति यावत्। तच्च भक्त्यैवेति सूरिपदेन भक्ता उच्यन्ते। तथाच भक्तानां सार्वदिकदर्शनं † नियम्यते सदेति पदेन। एवं सति पुष्टिमार्गीयभगवद्भावं प्राप्तस्य मुक्तावुच्यमानायां तन्नियमो भज्येतेत्यर्थः। यच्चोक्तं साधनावस्थायामुक्तमावस्थारूपत्वं परं तदीयत्वस्य फलं मुक्तिरेवेति तचाहातद्रूपेति। उक्तभगवदीयत्वं न साधनरूपमपि तु मुक्तेरपि फलरूपं।

मुक्तानामपि सिद्धानां नारायणपरायणः सुदुर्लभः प्रशान्तात्मेति वाक्यात्।

> यदा सर्वे प्रमुच्यन्ते‡ कामा येऽस्य हृदि श्रिताः।
> अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥

इति श्रुत्याऽमृतस्य मुक्तस्य ब्रह्मस्वरूपभोग उच्यते। स च

---

* पुष्टिमार्गीयभगवद्भावं इति ख'।

† सर्वदिग्दर्शनं इति ख'।

‡ प्रभिद्यन्ते इति वा पाठः।

यमेवैष वृणुत इति श्रुतेर्भगवदीयत्वसाध्यएवेति स्पष्टं फलत्वम्*-स्यातोऽतद्रूपत्वं।

किञ्च। फलं हि साधनादुत्तमं भवति। भगवदीयत्वा-दुत्तमस्यार्थस्याभावादपि न मुक्तिर्वक्तुमुचिता। तदुक्तं श्रीभाग-वते पञ्चमस्कन्धे पूर्व्वं भक्तिस्वरूपं† निरूप्य। तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादि-तन्नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्व्वार्था इति।

न चाधिकारिकमपि पतनानुमानात् तदयोगात्॥ ४०॥

अथेदं विचार्य्यते। ध्रुवमपि च ब्रह्मादिलोकाधिकारं दत्त्वा तत्सम्बन्धिफलं ददाति नवेति तत्र नेत्याह। न चेति। तत्र हेतुः पतनानुमानादिति।

आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन।

इति स्मृतेरित्यर्थः। फलस्य सावधित्वा‡दिति भावः। किञ्च तादृशे भगवदीये§ पतनायोगादपि¶ न तथा। अथवा तादृशस्य सदा भक्तिरसानुभवात् तदतिरिक्तस्यानपेक्षणादन्येषां फलानां सम्बन्धाभावादित्यर्थः।

---

* स्पष्टफलत्वमिति ख।

† सर्व्वं भक्तिस्वरूपमिति ख।

‡ फलस्य सावधिकत्वात् दिति ष पाठः।

§ भागवदीये इति ख।

¶ पजनायोगादपि इति ख।

## उपपूर्व्वमपि त्वेके भावमशनवत्तदुक्तं ॥ ४१ ॥

एके भक्ता आधिकारिके फले पतनमात्रं न हेयत्वप्रयोजक*-मिति वदन्त्यपितूपपूर्व्वं पतनमेव तदिति वदन्ति भक्तिभावात् च्युतेः। अधिकारसमाप्तौ भगवदनुग्रहाद्यापि कदाचित् सम्भवतीत्युपपतनं तत्। मुक्तौ त्वपुनरावृत्तेर्भक्तिरसाद्यापि नेति महापतनमेव चेति भावः। तेन निषिद्धकर्मफलतुल्यत्वं ज्ञापितं भवति। अतएव श्रीभागवते

नारायणपरा लोके न कुतश्चन बिभ्यति।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः॥

इति गीयते। भक्तिमार्गे तु साक्षात्सङ्गाभावेऽपि तदीयं भावमात्रं†मप्यशनवत् साक्षाद्भगवत्स्वरूपभोगवदेव मन्यन्ते। तदुक्तं श्रीभागवते। अथ ह वाव तवेत्यादिना। साक्षाद्भगवद्-भोगो जीवस्यासम्भावित इति शङ्कानिरासायाह तदुक्तमिति। सोऽश्नुते सर्व्वान् कामान् सह ब्रह्मणा विपश्चितेति। अत्र ब्रह्म समश्नुत इत्यादिश्रुतिषु साक्षात्ब्रह्मस्वरूपरसाशनमुक्त-मित्यर्थः।

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४२ ॥

अथेदं चिन्त्यते। प्रचुरभगवद्भावमात्रवतः साक्षात् स्वरूप-भोगवतो वा गृहत्यागः कर्त्तव्यो नवेति। फलस्य सिद्धत्वा-न्नेति पक्षव्यवच्छेदाय मदार्त्तायातयामानां न बन्धाय गृहा मता इति वाक्यात् बन्धकत्वेन त्याज्य इति पक्षव्यवच्छेदाय च तु-

---

* पतनमात्रं तु हेयत्वप्रयोजकं इति ख।

† तदीयभावमात्रमिति ख।

शब्दः। भावमात्रे साक्षात्प्रभुसम्बन्धे वोभयथापि गृहात् बहि-र्गमनं गृहत्याग इति यावत्। स आवश्यकः। तत्र प्रमाण-माह। स्मृतेरित्यादि।

त्वन्तु सर्व्वं परित्यज्य स्नेहं स्वजनबन्धुषु।
मय्यावेश्य मनः सम्यक् समदृग्विचरस्व गां॥

इत्यादि स्मृतिर्भगवत्भाववतस्तत्सङ्गविशिष्टस्यापि बहिर्गमन-माह। तदाचारोऽपि तथैव श्रूयतेऽतस्तथा। अत्रायमाशयः। आश्रमधर्म्मत्वेन गृहत्यागो यदहरेवेत्यादिश्रुतिभ्यः पूर्व्वमुप-पादितोऽपि यदधुना पुनरुच्यते तेन तदतिरिक्तोऽयमिति ज्ञायते। तथाचोक्तवाक्यात् मुमुक्षुमुक्तिप्रतिबन्धकत्वाभावेऽपि व्यासङ्गस्य तत्रावश्यकत्वादुक्तोभयोरप्यनवरतं प्रभुरसास्वादे प्रतिबन्धकत्वेन तस्य तत्त्यागस्य विप्रयोगरसानुभावकत्वेन च स कर्त्तव्यः यद्यपि स्नेहान्तरायत्वेन स्वतएव तत्त्यागो भावी तथा-प्याश्रमादाश्रमं गच्छेदिति वाक्यादत्राश्रमान्तरत्वाभावेन त्याग-स्याविहितत्वशङ्काभावायेयमुक्तिरिति।

## स्वामिनः फलश्रुतेरित्यात्रेयः॥ ४२॥

पुष्टिमार्गीयभक्तस्य विहितत्वादिज्ञान*मप्रयोजकं। तत्र हेतुः तस्य भक्तिमार्गस्वामिनः श्रीगोकुलेशादेव फलस्य श्रुतेरतो बहिर्गमनं न साधनत्वेनाच कार्य्यमिति भावः। अत्र यमेवैष वृणुत इति श्रुतिरनुसन्धेया। एतदनुपदमेव पद्यते नायमात्मा बलहीनेन लभ्य इति। अत्र भगवद्वरणानन्तरमपि जीवबलं

---

* विहितत्वादिति ज्ञानं इति ख।

कतमं यदपेक्षा भगवल्लाभ इति जिज्ञासायां सर्व्वात्मभाव-
एव बलमिति निर्णीयते। तस्यैव मर्य्यादाबलोपमर्द्दकत्वात्
भगवद्वशीकारहेतुत्वाच्च। व्रजसीमन्तिनीनां प्रभुवचनातिक्रम-
मपि कृत्वा स्वरूपपरिग्रहस्तद्बलेनैव यत इत्याचेय आचार्य्यो
मनुते। इदमत्राभिप्रेतं। सर्व्वात्मभावस्य यद्बलं तत्तदात्मकस्य
प्रभोरेव। तस्य चायं स्वभावो यदन्यन्न रोचतेऽतएव व्रजपरिवृढ़-
वदनेन्दुवचनकिरणप्रचारप्रोच्छलत्केवलभावाम्भोधिवचनवीचयो
गीयन्ते यर्ह्यम्बुजाक्ष तव पादतलमस्माक्षं तत्प्रभृति नान्यसमक्षं
स्थातुं पारयाम इत्यादयः। अतस्त्यागस्तु पृष्ठलग्न इवायाा-
तीति न तदर्थं यतनीयमिति। विष्ण्ववतारत्वेन पुरुषोत्तम-
भावस्वरूपज्ञोऽयमिति तथा।

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परि-
## क्रीयते ॥ ४४ ॥

सर्व्वत्यागपूर्व्वकं यद्बहिः प्रभुसमीपगमनं भक्तस्य तदार्त्विज्य-
मृत्विक्कर्म्मैवेत्यौडुलोमिराचार्य्यो मन्यते। तस्यायमभिसन्धिः।
यजमानो हि स्वेष्टसिद्ध्यर्थमृत्विज आदौ वृणुते। प्रकृते च यमे-
वैष वृणुत इति श्रुतेस्तस्मादेकाकी न रमत इति श्रुतेश्च स्वक्रीड़ार्थं
भगवान् स्वचिकीर्षिततत्तल्लीलानुरूपान् जीवान् वृणुते। पुनः
स्थविरान्वेति विकल्पादेकरूपाणां यथा सोमादिषु वरणं तथा
सर्व्वात्मभावत्वेनैकरूपाणामेवात्र वरणं। तत्र यथा स्वीयस्वीय-
तदङ्गमात्रकरणं तेषां तथेतरसम्बन्धनिवर्त्तनपूर्व्वकं * तद्भोग्य-
समर्पकत्वमत्र। तदुक्तं भगवता। यदा पुमांस्त्यक्तसमस्तकर्मा

* तथेतरसम्बन्धिनिवर्त्तनपूर्व्वकमिति ख।

निवेदितात्मा विचिकीर्षितोम इति। अत्र पूर्व्वपदेनेतरसम्बन्ध-निवर्त्तनोक्त्या सर्व्वात्मभाव उक्तो भवति। तदनन्तरमात्मनिवेदने सति तद्विषयकलीलाकरणेच्छाविषयः स भवति*। अन्तरङ्गलीलाप्रवेशनमिच्छायां विशेषस्तस्मात् सुष्ठूक्तमालिङ्ग्यमिति। एतेन न ददाति न पचतीत्यादि श्रुतेर्यथा सोमादौ दीक्षितस्य तद्यागेतरधर्मनिवृत्तिः सएव परमोधर्मो यतस्तथा पुरुषोत्तमस्यात्मभक्तैः सह रमणमेव सार्व्वदिकमेतदेव च महन्महत्त्वमिति सूचितं भवति। प्रकृते भक्तानामृत्विक्त्वेन निरूपणे हेतुत्वेन तात्पर्य्यान्तरमप्याह। तस्मै यजमानारब्धकर्मसाङ्गत्वाय ऋत्विक् परिक्रीयते वरणेन स्वकार्य्यमात्रोपयोगित्वाय स्वीयः क्रियते। तथा प्रकृतेऽपि। न च कश्चित् कल्याणो दक्षिणा इति प्रश्नवचनात् तदर्थैव तत्प्रवृत्तिरत्र तु स्वतः पुरुषार्थत्वेन भगवदर्थ्या प्रवृत्तिरतो वैषम्यमिति वाच्यं। नीरागस्यापि वरणसमये तत्प्रश्नस्यावश्यकत्वात् तथैव दक्षिणादानमप्यन्यथा निरङ्गत्वापत्तेः। प्रकृतेऽपि भक्तानां स्नेहादेव प्रवृत्तिर्भगवान् स्वानुभवार्थमेव ताननुभावयतीति न वैषम्यं।

श्रुतेश्च† ॥ ४५ ॥

अथर्वणोपनिषत्सु पठ्यते। भक्तिरस्य भजनन्तदिहामुत्रोपाधिनैराश्येनैवामुष्मिन् मनःकल्पनमेतदेव नैष्कर्म्यमिति भक्तिमार्गप्रचारैकहृदयो बादरायणः मानं भागवतं तत्र तेनैवं ज्ञेयमुत्तमैः।

* सम्भवतीति ख।

† योध्यामश्रुतेश्चेति पुस्तकान्तरसम्मतः पाठः।

## सहकार्य्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

ननु यमेवैति श्रुतिः साधनान्तरनिषेधपूर्व्वकं वरणस्यैव साधनत्वमाह। तस्मादेवंविच्छान्तोदान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येदिति श्रुतिः साधनान्तरमप्याह। एवं विरोधे श्रुतित्वाविशेषात् किमादरणीयं किन्नेति संशये साधनान्तरविधिरेवादरणीयोऽन्यथा शास्त्रवैयर्थ्यं स्यादिति प्राप्त उच्यते सहकार्य्यन्तरविधिरिति। मर्य्यादापुष्टिभेदेन वरणं द्विधोच्यते। तत्र सहकार्य्यन्तरविधिस्तु मर्य्यादापक्षेणोच्यते पुष्टौ तु नान्यापेक्षेति न विरोधगन्धोऽपि। अपरञ्च। साधनं हि कायिकं वाचनिकं* मानसिकञ्च विधीयते। तत्र मनसैवाप्तव्यमिति श्रुतेस्तृतीयं मुख्यं। तदपि तावदेव मार्य्यादिकस्यापि विधेयत्वेन कर्त्तव्यं यावत् स्नेहो न भवति। यतस्तद्वतः स्नेहवतस्तूक्तं तृतीयं साधनमपि विध्यादिवत्। यथा तद्वतो विधिरर्थवादो वा प्रवृत्तावप्रयोजकस्तस्य स्वतएव सम्भवात् तथा भगवत्प्राप्ताविदमित्यर्थं कैमुतिकन्यायेन पूर्व्वयोरप्रयोजकत्वमेतच्छेषत्वादेवायास्यतीति तृतीयमेवोक्तं।

## कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥

ननु बहिस्तूभयथेत्यादिना भगवदीयस्य गृहत्याग आवश्यक इति निरूपितं छान्दोग्ये त्वाचार्य्यकुलादित्युपक्रम्य छान्दोग्योपनिषदन्ते आचार्य्यकुलाद्वेदमधीत्य गुरोः कर्म्मातिशेषेणातिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्

---

* वाचिकमिति वा पाठः।

विद्धदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्त्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्त्तते न च पुनरावर्त्तते *। इदं विषयवाक्यं ब्रह्मलोकमभिसम्पद्यत इति गृहिणोपसंहारः कृतः। वाजसनेयिशाखायाञ्चैतद्ध स्म वै तत् पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्त इत्युपक्रम्याथ भिक्षाचर्य्यं चरन्तीति पद्यते। एवं सति विकल्पे सम्भवत्यप्युपसंहारस्य तात्पर्य्यग्राहकत्वाद्गृहिणएव यथोक्तकर्तुर्ब्रह्मसम्पत्तिरितिश्रुतेस्तात्पर्य्यं। त्यागोक्तिस्तु ब्रह्मैतादृशं यदर्थं सर्वं त्यजत इति स्तुतिपरेति प्राप्ते गृहिणोपसंहारे हेतुत्वेन तात्पर्य्यमाह। कृत्स्नेति। त्यागे वाङ्मनसोरेव भगवति विनियोगो न सर्वेन्द्रियाणां। गृहिणस्तु सर्वैः प्रकारैर्भजनं भवतीति परिजनश्च कृतार्थो भवतीति वा भजने कृत्स्नता भवतीति तेनोपसंहारः कृत इत्यर्थः। अतएवात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्येत्युच्यते। अत्रात्मपदं भगवत्परमिति ज्ञेयं। कर्ममार्गीयगृहिव्यवच्छेदाय तुशब्दः।

अत्रेदमाकूतं। भक्तिमार्गो बहुविध इति कपिलदेववाक्यात् केचन भक्ताः स्वगृहेष्वेव स्नेहेन भगवदाकारे विविधोपचारैः सेवां कुर्वन्तस्तयैव निर्वृत्या मुक्तिमपि तुच्छां मन्यन्ते। तदुक्तं। मधुद्विट्स्वनुरक्तमनसामभवोऽपि फल्गुरिति। तेन भगवद्भजनएव तत्रापि पुष्टिमार्गएव श्रुतेर्भर इति ज्ञायते। पूर्वमुत्कटभगवद्भाववतां तदर्थं त्यागं निरूप्य गृहिणोप-

* क्वचिदपि द्विरावृत्तिर्दृश्यते।

संहारतात्पर्य्यं पश्चाद्यन्निरूपितवांस्तेन तादृग्भाववतैव त्यागः कार्य्यस्तद्रहितेन तु गृहएवोक्तरीत्या प्रभुभजनं कार्य्यं तेनैव तल्लाभ इति व्यासहृदयमिति ज्ञायते। उक्तभावाभावे त्याग-धर्म्मानिर्व्वाहादिति। केचन भक्ता भाषणादिलीलादर्शनं विना स्थातुमशक्ताः प्रचुरभावविवशाशया गृहांस्त्यक्त्वा वनं गच्छन्ति। आग्नेयीडुलोभिरश्चान्तु भगवदवतारसामयिकभक्तादयोक्ता। एते सर्व्वे फलमार्गीयाः वाजसनेय्युक्तास्तु साधनमार्गीया इति नानुपपत्तिः काचित्।

## मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

किञ्च। सन्न्यासिन आवश्यका ये धर्मास्ततोऽधिकास्ते गृहिणः सिध्यन्तीत्यपि हेतोस्तेनोपसंहारः कृत इत्याशयेनाह। मौनवदित्यादि। मौनपदमनीहानिलायामादित्रिदण्ड-धर्म्मोपलक्षकं। यथा वागिन्द्रियमात्रदेहमात्रचित्तमात्रनियामकास्ते धर्मा उक्ता न्यासिनस्तथेतरेषामपीन्द्रियनियामकानां धर्म्माणामात्मनि सर्व्वेन्द्रियाणि संप्रतिष्ठाप्येति श्रुत्वा गृहिण उपदिश्यन्त इति युक्तो गृहिणोपसंहार इत्यर्थः। तत्र नियमन-मात्रमत्र तु भगवति विनियोगादाधिक्यमिति भावः। वस्तुतस्तु केवलनियमनस्याप्रयोजकत्वात् तत्रापि भगवति विनियोगएव तात्पर्य्यमिति ज्ञेयम्।

## अनाविःकुर्व्वन्नन्वयात् ॥ ४९ ॥

ननु भगवति सर्व्वेन्द्रियविनियोगात् गृहिणोपसंहार इति न युज्यते शुचौ देशे स्वाध्यायमधीयान इत्यादिकर्ममार्गीय-साधनस्तुतेरित्याशङ्क्य तत्तात्पर्य्यमाहानाविःकुर्व्वन्निति। भग-

तद्भावस्य रसात्मकत्वेन गुप्तस्यैवाभिप्रेतस्वभावकत्वादाश्रमधर्मैरेव लोके स्वं भगवद्भावमनाविःकुर्वन् भजेतेत्येतदाशयेन ते धर्मा उक्ताः । गोपने मुख्यं हेतुमाहान्वयादिति । यतो भगवता सममन्वयं सम्बन्धं प्राप्य वर्त्ततेऽतो हेतोस्तथा । अत्र ल्यब्लोपे पञ्चमी । एतेन यावदन्तःकरणे साक्षात् प्रभोः प्राकट्यं नास्ति तावदेव बहिराविःकरणं भवति प्राकट्ये तु न तथा सम्भवतीति ज्ञापितं ।

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

वैदिककर्मकरणे तात्पर्य्यमुक्त्वा लौकिकस्यानावश्यकत्वेऽपि तत्समयमाह । प्रस्तुतं प्रभुभजनं तत्प्रतिबन्धासम्भव एवैहिकं कर्म कार्य्यं । नन्वैहिकं कर्मास्तु मा वातस्तत्समयोक्तिर्व्यर्थेत्याशङ्क्याह ।* तद्दर्शनादिति । आचार्य्यकुलादित्युपक्रम्याग्रे पद्यते धार्मिकान्विदधदिति । अतो धार्मिकपुत्रविधानमैहिकं कर्म श्रुतौ दृश्यतेऽतस्तत्समयोक्तिरावश्यकी अन्यथा श्रुतावुक्तमस्तीति प्रस्तुतबाधेऽपि तत्करणे फलप्रतिबन्धः स्यादिति भावः ।

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥

ननु† तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति श्रुतौ मुक्त्यनन्तरं ब्रह्मसम्पत्तिः श्रूयते । सा तु पुरुषोत्तमसङ्गे लीलारसानुभवातिरिक्ता वक्तुमशक्या मुक्तोपसृप्यव्यपदेशात् ।

---

* प्रस्तुतं प्रभुभजनं तद्दर्शनात् इति ख ।

† ननु तस्येति ख ।

मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥

इति स्मृतेश्च मुक्तेः फलं भक्तिरसानुभव एव। एवं सत्युक्त-स्वरूपिणस्तत् फलं भवति नवेति संशये निर्णयमाह। एवंभूत-स्योक्तरूपस्य मुक्तस्य मुक्तेर्यत् फलं भक्तिरसानुभवस्तस्यानियम-स्तस्य भगवदिच्छाधीनत्वात् साधनाप्राप्यत्वात्। अतएव मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगमिति शुकवाक्यं। अत्रौत्-सर्गिकं हेतुमाह तदवस्थेति। न स पुनरावर्त्तत इत्यस्यावृत्त्या मुक्त्यवस्थाया एव सार्व्वदिकत्वेन निर्द्धारः क्रियते। यद्यप्येवं मुक्तिफलाभावनियम एवायाति न तु तदनियमस्तथापि तस्य तावदेव चिरमित्यादिप्रमाणैर्न स पुनरावर्त्तत इति श्रुत्या समं विरोधाभावायौत्सर्गिकी तदवस्था। तत्फलन्तु कस्यचिदत्यनुग्रहेण पुष्टौ प्रवेशने भवतीति स्वाभिप्रायं प्रकटीकुर्वता बादरायणेना-नियमः इत्युक्तं। एवं सति न स पुनरावर्त्तत इति श्रुतिः प्रपञ्चे पुनरावृत्तिं निषेधति न तु तदतीतेऽपीति ज्ञेयं। समाप्ति-ज्ञापनायावृत्तिः। अथवा श्रुतौ तदवस्थावधृतेर्हेतोरस्माकमपि तदवस्थावधृतिर्यतोऽतः फलानियमनिश्चयोऽपीत्यर्थः। एवं सति मुक्तिपर्य्यन्तं साधनं भगवद्भाव इति निर्णयः सम्पन्नः।

इति श्रीवेदव्यासमतवर्त्ति श्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्राणु-भाष्ये तृतीयाध्यायस्य चतुर्थः पादः समाप्तः।

---

# चतुर्थोऽध्यायः

## प्रथमः पादः ।

समन्वयेनाविरोधात् साधनैर्ब्रह्मविद्यदि ।
तस्याग्निमव्यवस्था या सा चतुर्थे विविच्यते ॥
जीवतो म्रियमाणस्य गच्छतः सफलस्य च ।
अतो ब्रह्मविदा कार्य्यमेवमेव न चान्यथा ॥
तामसीं बुद्धिमाश्रित्य ये मूढ़ाः सर्व्वविप्लवं ।
वदन्ति शास्त्रनाशाय सद्भिः शोच्यास्त ये नु तान् ॥
ब्रह्मविन्मननाभावः शतांशेनापि चेत् भवेत् ।
शास्त्रमेतद्वृथाजातं सर्व्वसूत्रविनाशतः ॥
स्वाप्ययस्य च सम्पत्तेश्च ब्रह्मगतिश्रुतौ ।
अन्यथा न श्रुतेरर्थः स्याच्चेद्व्यासो वदेन्न किं ॥
तामसीं बुद्धिमाश्रित्य या मुक्तिः कैश्चिदुच्यते ।
सा सुषुप्तिश्रुतेरर्थो मोहादेवान्यथामतिः ॥
अतो ब्रह्मविदः कार्य्यं जीवतः पूर्व्वमुच्यते ।
आवृत्तिः श्रवणादीनां नवत्वोपदेशतः ॥
दर्शनार्थत्वतो लिङ्गादपि व्रीह्यवघातवत् ।
आवृत्तौ श्रवणादीनामात्मेति स्यात् दृढ़ा मतिः ॥
आपाततो दर्शनं तदभेदेनापि बोध्यते ।
प्रतीकोपासनादीनां नैवं भावो हि जायते ॥

आलम्बनार्थं तत्रापि ब्रह्मदृष्टिर्विशिष्यत ।
आदित्यादिब्रह्मदृष्टेरङ्गत्वं न स्वतन्त्रता ॥
मनने च निदिध्यासे विशेषश्चोच्यतेऽधुना ।
आसनादिषडङ्गैस्तु चित्तं श्रौतार्थएव हि ॥
धारयेदामतेरेवं ततः सिद्धिमवाप्स्यति ।
धर्माधर्मभयं तस्य नास्त्येवेति विनिश्चयः ॥
अग्निहोत्रादिकं कार्य्यं सन्न्यासः फलएव हि ।
षोढ़ा चेत् पुरुषो व्यक्तः प्रारब्धान्ते फलं भवेत् ॥
एतावान् प्रथमे पादे निर्णयः सूत्रकृत्कृतः ।
द्वितीये म्रियमाणस्य सर्व्वेन्द्रियलयः पुरा ॥
लिङ्गस्यापि शरीरस्य नाड्युत्क्रान्तिरिहोच्यते ।
दिनायनकृती नास्य विशेषोऽस्तीति चोच्यते ॥
तृतीये क्रमसुक्तौ यो मार्गो यस्य श्रुतेर्मतः ।
तन्निर्धारोऽन्यमार्गीयाणामप्राप्यत्वञ्च वर्ण्यते ॥
गन्तव्यञ्च परं ब्रह्म कार्य्यो लोकस्तु नेति च ।
तुरीये पुष्टिमर्यादाभेदेन फलमुच्यते ॥
प्रभोरेव फलत्वं तन्निर्दोषत्वञ्च वर्ण्यते ।
लीलानित्यत्वतः पूर्णगुणत्वञ्च ततोऽखिलं ॥

अस्य फलप्रकरणत्वेऽपि साधनरूपस्यापि श्रवणस्यान्तरङ्गत्वं ज्ञापयितुं तन्निर्धारमप्याह ।

आवृत्तिरसकृदुपदेशात् ॥ १ ॥

आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिवाक्यैर्विहितं श्रवणादिकं किं सकृदेव कर्त्तव्यमुतासकृदिति भवति संशयः । किं तावत्प्राप्तं सकृदेवेति । तावतैव

शास्त्रार्थस्य सम्पत्तेः। नच तण्डुलनिष्पत्तिफलकावघातस्येव दर्शनफलकानां श्रवणादीनां तत्सिद्धिपर्यन्त*मावृत्तिर्न्यायप्राप्तेति† वाच्यं। अवघातस्य वितुषीकरणात्मकदृष्टद्वारकत्वेन तथात्वमस्तु नाम प्रकृते त्वदृष्टद्वारकत्वात् सकृत्तेनैवादृष्टद्वारा फल-सम्पादनसम्भवादावृत्तिरप्रयोजकेति‡ प्राप्त उच्यते। आवृत्ति-रेव श्रवणादीनां श्रुत्यभिमता। कुतः। असकृदुपदेशात्। छान्दोग्ये श्वेतकेतूपाख्याने ऐतदात्म्यमिदं सर्व्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति वाक्येन जड़जीवयोर्ब्रह्मात्मत्वं नवकृत्व उपदिष्टवान्। तथाच सकृदुपदेशेनैव चेदर्थसिद्धिः स्यात् तदेकमेवार्थमेकस्य एकदैवासकृन्नोपदिशेत् प्रयोजना-भावात्। एतेनावघातवदन्तःकरणदोषनिवर्त्तनं दृष्टं§ द्वारमन्ये-षामुपदेशानां चरमस्य तस्य ज्ञानसाधकत्वमिति मन्तव्यं। अत्रैव हेत्वन्तरमाह।

लिङ्गाच्च॥२॥

श्रुत्यनुमापकत्वेन स्मृतिर्लिङ्गमित्युच्यते। सा च

यथायथात्मा परिमृज्यतेऽसौ
मत्पुण्यगाथाश्रवणाभिधानैः।
तथातथा पश्यति तत्त्वसूक्ष्मं
चक्षुर्यथैवाञ्जनसम्प्रयुक्तं॥

---

* श्रवणादीनां सिद्धिपर्य्यन्तमिति खं।

† आवृत्तिरिति वाच्यं इति खं।

‡ अप्रयोजिकेति वा पाठः।

§ दृष्टद्वारमिति वा पाठः।

इत्यादिरूपा तदावृत्तिमेव फलसाधकत्वेनाह । अत्र दृष्टान्तेनापि दृष्टद्वारकत्वं श्रवणादीनां सूच्यते आत्मा वारे द्रष्टव्य इतिपदेन श्रवणादीनां फलात्मकं दर्शनं पूर्व्वमुक्त्वा श्रोतव्यो मन्तव्य इत्यादिना तत्साधनानि पश्चात् यदाह तेनात्मनः परोक्षमपि ज्ञानमवान्तरफलरूपमिति भक्तिमार्गे परमफलरूपतत्सजातीयत्वेन च फलमध्यपातित्वेवेति श्रुत्यभिमतमिति ज्ञायते । तेन सूत्रकृदपि फलप्रकरणेऽपि साधनविचारं चकारेति निगूढ़ाशयः । तथापि शाब्दक्रमादार्थक्रमो बलीयानितिन्यायात् द्रष्टव्य इति पदस्य पश्चात्सम्बन्धे तूक्तरीतिर्नावसरं प्राप्नोतीति प्रकृतविचारस्य फलप्रकरणासङ्गतत्व*मापततीति प्रकारान्तरेण सूत्रार्थ उच्यते । आवृत्तिरसकृदुपदेशात् । श्रुतिर्हि कर्म्मज्ञानभक्तीः साक्षात्परम्पराभेदेन पुरुषार्थसाधनत्वेन हीनमध्यमोत्तमाधिकारिणः प्रति कर्त्तव्यत्वेन प्रतिपादयति । तत्र तेषां स्वरूपं तृतीयेऽध्याये बादरायणेन प्रतिपादितमथ तुरीयेऽध्याये तेषां फलं चिन्त्यते । तत्रादौ कर्म्ममार्गस्य फलमुच्यते । ज्ञानभक्त्योरेव क्रमेणोत्तमात्युत्तमफलकत्वमतस्तत्साधनत्वेनैव तत्कर्त्तव्यं न तु स्वातन्त्र्येणेति ज्ञापयितुं आवृत्तिरिति । कर्म्ममार्गस्यावृत्तिः पुनर्जन्मफलं तदप्यसकृत् इदं पदमावृत्त्योभयत्रापि सम्बध्यते । तथाचात्र प्रमाणापेक्षायां तदाह हेतुत्वेनासकृदुपदेशादिति । श्रुतौ कर्म्ममार्गे पुनर्जन्मासकृदुपदिश्यते यतोऽन्यथा सकृदुपदेशेनैव तदवगमेऽप्यसकृदुपदेशोऽव्यर्थः स्यादतस्तथेत्यर्थः । वाजसनेयि-

---

* फलप्रकरणासमन्वतत्वमिति वा पाठः ।

शाखायां पठ्यते एवमेवायꣳ शारीर आत्मैभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैवेति। तत्रैव पुनस्तेन प्रद्योतेनैष* आत्मा निष्क्रामतीत्युपक्रम्य पठ्यते तं विद्याकर्म्मणी समन्वारभेते पूर्व्वप्रज्ञा चेति। तत्रैवैतदनुपदमेव तद्यथा तृणजला यूकेत्युपक्रम्य पठ्यत एवमेवायं पुरुष इदꣳ शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरꣳ रूपं तनुते पित्र्यं वा गान्धर्व्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वान्येभ्यो वा भूतेभ्य इति। तत्रैवाग्रे पठ्यते

प्राप्यान्तं कर्म्मणस्तस्य यत्किञ्चेह करोत्ययं।
तस्माल्लोकात् पुनरेत्यस्मै लोकाय कर्म्मणे ॥ इति

अत्र हेत्वन्तरमाह। लिङ्गाच्च। वेदानुमापकत्वेन स्मृतिर्लिङ्गमित्युच्यते। सा च भगवद्गीतासु त्रैविद्या मामित्युपक्रम्य पठ्यते।

एवं त्रयीधर्म्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते। इति
आब्रह्मभवनाल्लोकाः पुन-
रावर्त्तिनोऽर्जुन। इति च

अथवा यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्म्मणा भवति पापः पापेनेति श्रुतिर्वर्त्तमानजन्मकर्म्मणोः पूर्व्वजन्मसम्बन्धिकर्म्मानुमापकत्वं वदतीति कर्म्मिणः पुनर्जन्मावश्यकमिति ज्ञायते। एवं सति लिङ्गत्वेन निरूपणादित्यर्थः सम्पद्यते। निवृत्ति-

* प्रद्योतेनैव इति वा पाठः।

मार्गीयस्यापि तस्य ज्ञानोपकर्त्तृत्वमात्रं न तु जन्मनिवर्त्तकत्वं* मानाभावात् ।

एवं कर्म्मफलं विचार्य्य ज्ञानफलं विचारयति ।

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥

पूर्व्वार्थनिरूपणव्यवच्छेदाय तु शब्दः । ज्ञानिनो हि भगवन्तमात्मत्वेनैवोपासते । तस्या नैरन्तर्य्येऽनेकजन्मभिस्तथैव तेषां हृदि भगवान् स्फुरति । तदा स्वानन्दांशस्याप्याविर्भावाद् ब्रह्मभूतः सन्नात्मत्वेनैव † स्फुरितमिति तदानन्दात्मकः सन् तमनुभवति । एवं स्थितः प्रारब्धसमाप्तौ देहापगमे तत्रैव प्रविष्टो भवति । एतादृशः सर्व्वोपकारीति परार्थमपि तस्मै भगवता ज्ञानं दत्तमिति प्रवचनमपि तस्य फलान्तःपातीत्यधिकारिण्युपस्थिते तथैवोपदिशति च । एतदेवाह आत्मेत्यादिना । उप समीपे गमनं प्रवेश इति यावत् । अथवा । ननु ज्ञानभक्त्योरनावृत्तिः फलमत उक्तमेतेन तु कर्मेत्याशयेन कर्मणः फलमावृत्तिरिति यन्निरूपितं तन्नेदं चिन्त्यते । न स पुनरावर्त्तत इति श्रुतिः सर्व्वथाऽनावृत्तिमाहोत सावधिकीं तामभरशब्देन तन्निवृत्तिमिव । किमत्र युक्तं सावधिकीमेवेति । तथाहि पूर्व्वकर्म‡नैयत्यस्य त्वयाप्यङ्गीकार्य्यत्वात् तस्य प्ररोहैकस्वभावत्वात् § तस्य दुरतिक्रमत्वात् तत्फलानुभवस्यावश्यकत्वात् । अपिच ।

---

* न जन्मनिवर्त्तकत्वमिति ख' ।

† ब्रह्म स्फुरितमिति पुस्तकान्तरसम्मतः पाठः ।

‡ पूर्व्वं कर्म्मनैयत्यस्येति वा पाठः ।

§ प्ररोहैकत्वस्वभावत्वात् इति च पुस्तकान्तरे दृश्यते ।

य एनं विदुरिति श्रुतेः सति ज्ञाने हि सा। यतोवाचः अगृह्यो न हि गृह्यत इत्यादिश्रुतिभ्यो ब्रह्मज्ञानासम्भवात्। इतएव भक्तिरपि प्रत्युक्ता वेदितव्या ज्ञानाविषये स्नेहासम्भवात्।

किञ्च। सर्व्वस्य वशी सर्व्वस्येशान इत्यादिश्रुतिभ्यो यस्यावतारकर्माणि गायन्ति * ह्यस्मदादयः न यं विन्दन्ति तत्त्वेनेत्यादिस्मृतिभ्यश्च का प्रत्याशा जीवस्यातिहीनस्य तत्प्राप्तावतएवोपदेशासम्भवोऽपीति प्राप्ते प्रत्याहात्मेतीत्यादिना। तुशब्दः पूर्व्वपक्षनिरासकः। अत्रायमाशयः। सत्यमुक्तं भवता तत्रोच्यते। यथाऽगृह्यत्वातिमहत्त्वादिधर्मा भगवति सन्ति तथा सर्व्वात्मत्वमपि य आत्मनि तिष्ठन्नित्यादिश्रुतिष्वात्मत्वेनैवोक्तेः। सर्व्वधर्माश्रयत्वेऽपि यदा यं धर्म्मं पुरस्कृत्य लीलां करोति तत् कार्य्यमेव तदा सम्पद्यते। हितकारित्वस्वभावत्वात् तस्य। एवं सति यस्मिन् पुरुषे यदात्मत्वेन लीलां करोति तदा स्वप्राप्त्यनुकूलप्रयत्नवन्तं विधायात्मानं प्रापयति। ननूक्तं दुरतिक्रमः कर्मस्वभाव इति। नैष दोषः। न ह्यन्नरसपाकाय जग्धमौषधमपि गौरवाय भवति। तेन न तन्निवृत्तिर्वा। व्यापादनैकस्वभावमपि विषमाशीविषं† तदपगमपटुतरनिगमसङ्गमो नापगमयति वा। तथा भगवदर्पितं तदर्थञ्च कृतं कर्म न कर्मनाशाय भवतीति न वक्तुं शक्यं कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथेति वाक्यात्। अगृह्यत्वगृह्यत्वविरोधापहारस्तु जीवसामर्थ्येश्वरेच्छाभ्यां पुरैव कृत इति नाधिकमत्र निरूप्यं। इति शब्दो हेत्वर्थे। तथाच भगवानात्मा भवति सर्व्वेषां जीवा-

* गायन्ते इति च पाठो दृश्यते।

† पुस्तकान्तरे आशीविषमिति न गृहीतं।

नामतो हेतोरुक्तरीत्या तदनुग्रहेण तमुपगच्छन्ति। ज्ञानमार्गेऽङ्गीकृतास्त्वात्मत्वेनैव ज्ञानादुप समीपएव गच्छन्तुरुक्तरीत्या अक्षरात्मके तत्रैव प्रविष्टा भवन्तीत्यर्थः। भक्तिमार्गेऽङ्गीकृतास्तु साक्षात् प्रकटे पुरुषोत्तमे सति तद्भजनार्थमुप समीपं गच्छन्तीत्यर्थः। एवं श्लेषोक्तिरियमिति ज्ञायते। सम्प्रदायानुवृत्तिरपि भगवदिङ्गितेत्येतादृशाः स्वयं येन मार्गेण फलं प्राप्तास्तं मार्गमन्यानपि ग्राहयन्तुपदेशैरत्रोभयत्राप्यात्मत्वमेव हेतुरन्यथा आत्मारामस्य सर्व्वनिरपेक्षस्यैतत्करणासम्भवेन मोक्षमार्गाप्रसिद्धिरेव स्यात्। तस्मात् सर्व्वथा अनावृत्तिरेव श्रुत्यभिमतेति ज्ञेयं।

नन्वात्मत्वेनोक्तिरुपासनार्थेति नोक्तं साधीय इत्यत उत्तरं पठति।

## न प्रतीके न हि सः ॥ ४ ॥

अतद्रूपे तत्त्वेनोपासनं हि प्रतीकमित्युच्यते। तथाच तादृशेन तेन स मोक्षो न भवतीत्यर्थः। श्रुतिसिद्धत्वान्नास्ति मोक्ष इति न वक्तुं शक्यमिति भावः। अथवा। आत्मत्वेनोक्तिरुपासनार्थेति वदन्वादी वक्तव्यः फलार्थमेव तत्। फलञ्च श्रुत्युक्तस्तत्प्रवेश एवेति त्वयापि वाच्यं। एवं सत्यादौ ज्ञानमार्गेऽनुपपत्तिमाह। न प्रतीके अनात्मभूते ज्ञानिनः उपगमः पूर्व्वोक्तः प्रवेशः सम्भवतीति शेषः। भक्तिमार्गेऽपि तामाह न हि स इति। न हि प्रतीकोपासने सः लोकवेदप्रसिद्धः पुरुषोत्तमोऽस्त्युपास्यत्वेन येन तत्प्राकट्यं स्यात् तदुपगमनञ्चेत्यर्थः। एवं ज्ञानभक्त्योः फलसत्ता साधिता।

ननु सर्व्वं खल्विदं ब्रह्म आत्मैवेदꣳ सर्व्वमित्यादिश्रुतयः सर्व्वत्र ब्रह्मदृष्टिं मुक्तिसाधनत्वेनोपदिशन्ति। सा च प्रतीकात्मिकैवेति कथं प्रतीकोपासनस्य न मोक्षसाधकत्वमिति प्राप्त उत्तरमाह।

## ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥

सर्व्वत्र ब्रह्मदृष्टिर्न प्रतीकात्मिका सर्व्वस्य वस्तुतो ब्रह्मात्मकत्वात्। सा च नोपदेशसाध्या अतो नोपदिश्यते किन्त्वनूद्यते। सा त्वधिकारोत्कर्षात् स्वतएव भवतीति प्रतीकोपासनस्य न मुक्तिसाधनत्वमिति साधूक्तं। एतदेवोक्तमनेन सूत्रेण।

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

छान्दोग्ये अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कन्त्व*मात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचेति अथ होवाचेन्द्रद्युम्नमित्युपक्रम्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचेति एवमेवाग्रे प्रश्नभेदेन वक्तृभेदेनाकाशापःप्रभृतय आत्मत्वेनोपासनाविषया उक्ताः। तत्तैवासौ वा आदित्यो देवमध्वित्युपक्रम्यान्ते पठ्यते य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्त इति। अत्रेदं चिन्त्यते। अत्र प्रतीकोपासनत्वमस्ति नवेति। अस्तीति पूर्व्वः पक्षः। तथाहि सर्व्वं खल्विदं ब्रह्मेति श्रुतौ सर्व्वमनूद्य ब्रह्मत्वं तत्र बोध्यत इति। न क्वचित् प्रतीकोपासनमस्तीति हि पूर्व्वं निरूपितं। तच्चोक्तश्रुतिभिः प्रत्येकं तत्त्वेनोपास्यत्वेनोक्त्या नोपपद्यते। ब्रह्मण एकत्वादेकप्रकारकेनैवोपासनेन सर्वेषां फलसिद्धेः पृथक् पृथगुक्तौ गौर-

* किं त्वमिति वा पाठः।

वात् प्रयोजनविशेषाभावाच्च । तादृशाधिकाराभावात् पृथक्तदुक्तिरिति चेन्न सर्वत्र सदा तद्भावनायां तथानुभवस्यापि सम्भवात् । एवं सति वस्तुतः सर्व्वस्य ब्रह्मत्वं नाभिमतं किन्तु यथादित्यादीनां तत् तथा* सर्व्वस्यापीति प्रतीकोपासनत्वमेव सर्व्वत्र तेनैव फलमिति प्राप्ते प्रतिवदति । आदित्यादौ याः ब्रह्मत्वमतय उच्यन्ते तास्तु साकारस्यैव ब्रह्मणो व्यापकत्वात् तस्य प्रत्येकमप्यङ्गमुपासितं फलदमित्येकैकाङ्गविषयिण्यस्ताः विधीयन्ते । उपपन्नं चैतत् । नहि साकारव्यापकब्रह्मणोऽङ्गं न ब्रह्मातो न प्रतीकोपासनत्वं तत्र । अपरञ्च । असौ वा आदित्यो देवमध्वित्युक्त्वा तस्य प्रतिदिक्रश्मीणां कृपावलोकनरूपाणां मधुत्वं निरूप्य तद्यत् प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्तीत्येते देवा अमृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्तीति पठ्यते । तथाच दर्शनमात्रेणान्यधर्म्मनिवृत्तिस्तस्यैव स्वतन्त्रपुरुषार्थत्वेन ज्ञानमतिशयितस्नेहजविगाढ़भावेन तत्रैव लयः । पुनस्तद्दर्शनानन्दानुभवार्थं भगवानेव कृपया पुनः पूर्व्वभावं सम्पादयतीति तस्मात् रूपादुदयश्चैतत् सर्व्वं भगवदङ्गत्व एवोपपद्यत इत्यपि हेत्वभिप्रेतोऽर्थोज्ञेयः । नहि प्रतीकत्वे इदं सर्व्वं सम्भवति । भक्तिमार्गीयत्वादस्यार्थस्येति भावः । अङ्गानां भगवत्स्वरूपात्मकत्वेनैक्यमिति ज्ञापनायैकवचनं । एतेन स्वरूपस्यैव फलत्वमुक्तं भवतीति मुख्यः सिद्धान्तः सूचितो भवति ।

---

* तथा तथा सर्व्वस्यापीति वा पाठः ।

आसीनः सम्भवात् ॥ ७ ॥

पूर्व्वसूत्रेण धर्म्ममात्रस्य फलत्वमुक्त्वा अधुना धर्म्मिणः फलत्वं तत्साधनञ्चाह। सम्भवात् उत्कटस्नेहात्मकसाधनस्य सम्भवात् तदधीनः सन् तदग्र आसीनो भगवान् भवति। एतेन भक्तवश्यतोक्ता। एवं बहिःप्राकट्यमुक्त्वा आन्तरं तदाह।

ध्यानाच्च ॥ ८ ॥

भावानौत्कट्यदशायां व्यभिचारिभावात्मकसततस्मृतिरूपध्यानादपि हृदि प्रकटः सन् आसीनो भवतीत्यर्थः। तेन स्थैर्य्यमुक्तं भवति। एवं भक्तेच्छयैव स्वरूपप्राकट्यमित्युक्त्वा लीलानाविष्करणमाविष्करणञ्चापि तदिच्छयैवेत्याह।

अचलत्वञ्चापेक्ष्य ॥ ९ ॥

भक्तेच्छामपेक्ष्याचलत्वं चकाराच्चलत्वमपीत्यर्थः।

स्मरन्ति च ॥ १० ॥

केचन भक्ताः स्वरूपनिरपेक्षास्तत्स्मरणजनितानन्देनैव विस्मृतापवर्गान्तफला भवन्ति। चकाराच्छ्रवणकीर्त्तनादयोऽपि समुच्चीयन्ते। तदुक्तं। अथ ह वाव तव महिमामृतसमुद्रविप्रुषा सकृल्लीढ़या स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतसुखलेशाभासाः परमभागवता इति। अथवा अहं भक्तपराधीन इत्यादिस्मृतिः पूर्व्वोक्ते प्रमाणत्वेनोक्ता।

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

अथेदं विचार्य्यते। बहिराविर्भावो येभ्योयेभ्यश्चान्तस्तेषामन्तेषाञ्च मिथस्तारतम्यमस्ति न वेति। तत्र निर्णयमाह।

यत्र भक्तेश्चैकाग्रता भगवत्स्वरूपे प्रकटएवैकस्मिन् ग्राहकचित्तधारा नत्वन्तर्बहिर्विज्ञानं तत्रोभयोरन्तःपश्यतो बहिःपश्यतश्च भावे भगवत्स्वरूपे च विशेषाभावान्न तारतम्यमस्तीत्यर्थः।

## आप्रायणात् तत्रापि हि दृष्टं ॥ १२ ॥

उक्तेऽर्थे एवायं संशयः। अन्तःप्राकट्यवतो यदा बहिःसंवेदने सत्यपि पूर्व्वानुभूतभगवत्स्वरूपानुभवस्तदा पूर्व्वमन्तरन्वभूवमधुना बहिरनुभवामीत्यनुव्यवसायो भवति नवेति। तत्र वैलक्षण्याद्भवितुमर्हतीति पूर्व्वः पक्षः। तत्र सिद्धान्तमाह। आप्रायणादिति। श्रीभागवते। प्रायणं हि सतामहमिति भगवद्वाक्यात् प्रायणशब्देन स्वतःपुरुषार्थत्वेन प्राप्यं परमं पारलौकिकं फलमुच्यते। तथाच तन्मर्यादीकृत्य तस्य सैवावस्था सार्वदिकी न तु बहिःप्राकट्येऽपि बहिष्ठानुसन्धानमित्यर्थः। ततस्तस्य तत्र सायुज्यं भवति न वेति संशये निर्णयमाह। तत्रापि प्रायणेऽपि प्राप्ते तस्य पूर्व्ववत् प्रभुणा सममालापावलोकनश्रीचरणनलिनस्पर्शादिकं दृष्टमेव फलं न त्वदृष्टं सायुज्यमित्यर्थः। यतः शुद्धपुष्टिमार्गेऽङ्गीकृतोऽन्यथा पूर्व्वोक्तभावसम्पत्तिः कथं स्यादित्युपपत्तिर्हि शब्देन सूच्यते। एतच्च तद्भूतस्य तु नातद्भाव इत्यत्र निरूपितं।

## तदधिगम उत्तरपूर्व्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

पुष्टिमार्गीयभक्तस्य फलं निरूप्य मर्य्यादामार्गीयस्य तस्य फलं चिन्त्यते। तत्र तु ज्ञानपूर्व्वकत्वं भक्तेरावश्यकं कर्म्म मर्य्या-

द्वाया अपि स्वकृतत्वात्तामनुल्लङ्घ्यैव भगवता फलं दीयते। तच्च नाभुक्तं क्षीयते तद्भोगानुकूलकर्मणा स्वसजातीयतत्-सन्तानजननादनिर्मोक्ष एव सर्व्वस्य सम्पद्यते। नच प्रायश्चित्त-वज्ज्ञानस्य कर्मनाशकत्वं वक्तुं शक्यं तद्वत्तस्य तदुद्देशेनाविहि-तत्वात्। तथाकथने चान्योन्याश्रयः। दुरितस्य चित्ताशुद्धिहेतु-त्वेन तन्नाशे ज्ञानोदयो यतोऽतोमर्य्यादामार्गे मुक्तिरनुक्तिविष-येति प्राप्त उच्यते। तदधिगमे ब्रह्मज्ञाने सति तज्ज्ञानस्वभावा-देवोत्तराघस्याश्लेषोऽसम्बन्धः पूर्व्वस्य तस्य विनाशो भवती-त्यर्थः। अत्रोत्तरस्योत्पन्नस्याश्लेष इति नार्थस्तस्यात्मन्येवोत्पत्ते-स्तदतिरिक्तस्य श्लेषस्याभावादतोऽनुत्पत्तिरेवार्थः। नचैवं मर्य्या-दामार्गीयत्वभङ्गः। साधनं विना स्वस्वरूपबलेनैव कार्य्यकरणे हि पुष्टिरिह तु नियतकर्मविरोधित्वस्वभावेन ज्ञानेनैव तथा सम्पत्तेः। अतएव तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्व्वे पाप्मानः प्रदूयन्त इति श्रुतिरग्निदृष्टान्तमाह। स्मृतिरपि

यथैधांसि समिद्धोग्निर्भस्मसात् कुरुतेऽर्ज्जुन।
ज्ञानाग्निः सर्व्वकर्म्माणि भस्मसात् कुरुते तथा॥ इति

सर्व्वं पाप्मानन्तरति तरति ब्रह्महत्यां योऽश्वमेधेन यजत इत्यादि श्रुतिभ्यस्त्वयापि न तद्भोगनियमो वक्तुं शक्यः। एते-नाभुक्तस्याक्षयाद्भोगे च कर्म्मान्तरजननान्मोक्षासम्भव इति निरस्तं वेदितव्यं। न चान्योन्याश्रयः। अनाद्यविद्याजनित-संसारवासनात्मिका हि सा। सा च गुरूपसत्तिश्रवणमनन-विष्णूपासनादिरूपया ज्ञानसामग्र्यैव नाश्यते। अविद्या परं ज्ञानेन नाश्यत इति क्व तत्प्रसङ्गः ज्ञानसामग्र्या बलिष्ठत्वात्

कर्म्मणो दुर्ब्बलत्वान्न तत्प्रतिबन्धकत्वमिति* ज्ञाननाश्यत्वबोधका†-श्रुतिस्मृतिमता त्वयाप्यूरीकार्य्यं । इममेव हेतुमाहाचार्य्य-स्तद्व्यपदेशादिति ।

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

पापस्य शास्त्रविरोधित्वेन शास्त्रीयज्ञानेन समं विरोधो भवतु नाम धर्म्मस्यातथात्वे नाविरोधएवेत्याशङ्कानिरासाय पूर्व्वन्यायातिदेशमाह । इतरस्य पुण्यस्याप्येवं । पूर्व्वस्य नाश उत्तरस्याश्लेष इत्यर्थः । अतिदेशाद्धेतुरपि सएव ज्ञेयः । तथाहि । उभे उ हैवैष एते तरति । क्षीयन्ते चास्य कर्म्माणीति सामान्य-वचनात् ज्ञानाग्निः सर्व्वकर्म्माणीति स्मृतौ सर्व्वशब्दाच्च तथा ।

अथेदं शङ्क्यते । मर्य्यादामार्गीयत्वात् ज्ञानानन्तरं भरत-वत्सङ्गदोषेण भगवद्भावाच्युतौ सङ्गजदोषोत्पत्तिवदग्रे विहित-निषिद्धकर्म्मणोरप्युत्पत्तिर्वक्तुं शक्येति ज्ञानस्य न सर्व्वात्मना कर्म्मविरोधित्वमिति तत्र निर्णयमाह । पाते भक्तिमार्गे भग-वद्भावाच्युतिः पात इत्युच्यते । तुरप्यर्थे । अपिशब्दे वाच्ये व्यवच्छेदार्थकतुशब्दोक्त्याऽस्मिन्मार्गे पापस्य व्यवच्छेदएव । न कर्हिचिन्मत्परा इति वाक्यात् । परन्तु मर्य्यादामार्गीयत्वात् प्रारब्धभोगार्थं प्रभुश्चेत् तथा करोति तद्भावे पूर्णे सति तद्भोगोऽ-सम्भावित इति तदैवं भवतीति व्यासाभिप्रायो ज्ञायते । तथाच तस्मिन् सत्यप्युत्तरस्य कर्म्मणोऽसंश्लेष एवेत्यर्थः । पूर्व्वसूत्रे एवमेवाश्लेषशब्दस्य व्युत्पत्तेः । अतिदेशस्त्वेवंपदेनैव प्राप्तेः सर्व्वं

---

* तत्तत्प्रतिबन्धकत्वमिति पुस्तकान्तरसम्मतः पाठः ।

† ज्ञानानाश्यत्वमिति ख ।

सूत्रं तत्परत्वेन व्याख्येयं*। पातशब्दस्य देहपातं तुशब्दस्याव-
धारणमर्थमुक्त्वा देहपाते मुक्तेरावश्यकत्वावधारणं वाक्यार्थ इति
चोक्तिर्न साधीयसी। मुक्तिप्रापकपदाभावात्। भोगेन त्वितरे
क्षपयित्वाऽथ सम्पद्यत इत्यग्रे वक्तव्यत्वाच्च।

## अनारब्धकार्य्ये एव तु पूर्व्वे तदवधेः॥ १५॥

ननु देहस्य कर्म्मजन्यत्वात् तन्नाशे तन्नाशस्यावश्यकत्वात्
ब्रह्मविदः प्रवचनानुपपत्तिः। एवं सति ब्रह्मजिज्ञासोर्गुरूप-
सत्त्यादिसाधनासम्भव आचार्य्यवान् पुरुषो वेदेति श्रुतेस्तद-
भावेन ज्ञानमार्गोच्छेदेन मुक्त्युच्छेदप्रसङ्ग इत्याशङ्क्य समाधत्ते।
पूर्व्वे पूर्व्वसूत्राभ्यां ज्ञाननाश्यत्वेन ये प्रोक्ते पापपुण्ये ते नाशिषे
किन्त्वनारब्धभोगायतनलक्षणं कार्य्यं याभ्यान्ते एवेत्यर्थः।
नन्वितरनिरपेक्षं हि ज्ञानं स्वशक्त्यैवाग्निरेधइव कर्म्माणि
दहतीति पूर्व्वमुक्तं तथा सत्यशेषमेव तद्दहतीति वक्तुं युक्तं नतु
सशेषं शक्तेरविशिष्टत्वात्। नच कर्म्मनाशेऽपि संस्कारवशात्
कुलालचक्रभ्रमिवत् तद्वासनावशाद्देहादिसत्तया प्रवचना-
द्युपपत्तिरिति वाच्यं। ज्ञानस्य सर्व्वतो बलवत्त्वात् सवासनस्य
तस्य नाशनात्। न हि महाशिलानिपाते चक्रभ्रमिरनुवर्त्तितुं
शक्नोतीत्याशङ्क्यारब्धकार्य्यादहने हेतुमाह। तदवधेः। तत्
ज्ञानेनारब्धकार्य्यादहनं यत् तदखिलकारणकारणत्वेनाखिलस्य
पूर्व्वविधिरूपभगवदिच्छालक्षणाद्धेतोरित्यर्थः। यत्र तस्यापि दह-
नेच्छा तत्र तथैवेति निगूढाशयः। अतएवाग्रे तथा वक्ष्यते।

---

* तत्परत्वेन न व्याख्येयमिति ख।

अतएव श्रीभागवते मृगदारकाभासेन स्वारब्धकर्म्मणा योगा-रम्भणतो विभ्रंशित इति । उपभोगेन कर्म्मारब्धं व्यपनयन्निति च भरतं प्रति वचनं गीयते । एवं सति मणिमन्त्रादिप्रतिबद्धशक्ते-रग्नेरिव ज्ञानस्याप्यदाहकत्वे न काचिद्धानिरिति सर्व्वमनवद्यं । इच्छाप्रतिबद्धताद्दशायां न प्राचीना दशास्तीति तद्व्यवच्छेद-ज्ञापनाय तुशब्दः । एतेन भगवद्भावस्य सर्व्वतो वलवत्त्वात् कथं तस्य पात इति शङ्का निरस्ता । भगवदिच्छाया मूलकारणत्वे-नोक्तेस्तस्याः सर्व्वतो बलिष्ठत्वात् । तथेच्छा च स्वकृतमर्य्यादा-पालनाय पुष्टावङ्गीकृतेन तथेति सर्व्वमनवद्यं ।

## अग्निहोत्रादि तु तत्कार्य्यायैव तद्दर्शनात् ॥ १६ ॥

ननु प्रारब्धं हि प्राचीनं तन्नाशाय तद्भोगएव कर्त्तव्यो ब्रह्म-विदा नतु विहितमन्यदप्यग्निहोत्रादि प्रयोजनाभावात् । दृश्यते च ताद्दशानां तत्करणमत उत्तरस्य कर्म्मणः संश्लेष आवश्यक इत्याशङ्क्य तत्प्रयोजनमाह । तु शब्दः शङ्काव्युदासकः । अग्नि-होत्रादिविहितकर्म्मकरणं तत्कार्य्यायैव । भोगकार्य्याय प्रारब्ध-नाशायैवेत्यर्थः । येषां अग्निहोत्रादिकारकं प्रारब्धमस्ति तैरेव तन्नाशाय भोगवत् तदपि क्रियते नत्वताद्दशैरतएव न सनकादीनां तथात्वं * । कुत एतत् । तद्दर्शनात् । यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्म्मणा भवति पापः पापेनेति श्रुतिः पूर्व्वकर्म्मणोऽग्रिम-कर्म्महेतुत्वं दर्शयतीति नानुपपत्तिः काचित् । केचित्तु ज्ञानस्य

---

* तथैवेति इति खं ।

यत्कार्य्यं तदेवाग्निहोत्रादेरिति तत्कार्य्यायेति पदस्यार्थं वदन्ति । स न साधुः । तदधिगम इत्युपक्रमात् ब्रह्मविदः प्रारब्धात्मकप्रतिबन्धनाशे मोक्षस्य पूर्व्वज्ञानेनैव सम्पत्तेः कर्म्मणो वैयर्थ्यापातात् । तमेतं वेदानुवचनेनेत्यादि श्रुतिदर्शनं दर्शनपदार्थ इत्यपि पूर्व्वविरोधादुपेक्ष्यः ।

## अतोऽन्याऽपि ह्येकेषामुभयोः ॥ १७ ॥

तदेवं पूर्व्वसूत्रचतुष्टयेन मर्य्यादामार्गीयभक्तस्य मर्य्यादयैव मुक्तिप्रतिबन्धसम्भवस्तयैव तन्नाशश्चेति निरूपितं । अथ पुष्टिमार्गीयस्य विनैव भोगं प्रारब्धं नश्यति नवेति विचार्य्यते । तत्र भोगैकनाश्यस्वभावत्वात् तस्य न तं विनाऽस्यापि तन्नश्यतीति प्राप्ते निर्णयमाह । एकेषां पुष्टिमार्गीयाणां भक्तानामुभयोः प्रारब्धाप्रारब्धयोर्भोगं विनैव नाशो भवति । कुत एतत् तत्राह । अतः श्रुतेः कर्म्मणो ज्ञाननाश्यत्वनिरूपिकायाः । ब्रह्मविदएव प्रवचनादिनिरूपणेन तदनाश्यप्रारब्धाख्यकर्म्माक्षेपकश्रुतेश्चान्याऽपि श्रुतिः पद्यते । तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामिति ज्ञानभोगाभ्यां कर्म्मनाशनिरूपकश्रुत्यास्याः श्रुतेर्विरोधपरिहारायावश्यं विषयभेदो वाच्यः । न च काम्यकर्म्मविषयेयं श्रुतिरिति वाच्यं । तदधिगम उत्तरपूर्व्वाघयोरश्लेषविनाशाविति सूत्रेणेतरस्याप्येवमिति सूत्रावयवेन चाविशेषेणारब्धातिरिक्तकर्म्मणोरखिलयोर्नाशनिरूपणात् । पापकृत्यायां काम्यत्वासम्भवाच्च । तस्मादत्यनुग्रहभाजनस्य भक्तस्य स्वप्राप्तिविलम्बमसहिष्णुर्भगवानस्य प्रारब्धमेतत्सम्बन्धिगतं कृत्वा तस्य तेन भोगं कारयति । प्रारब्धं भोगैक-

नाश्यमिति स्वकृतमर्य्यादापालनाय न नाशयति। न च तयोर-मूर्त्तत्वेनाकृताभ्यागमप्रसङ्गेन च नैवं वक्तुमुचितमिति वाच्यं। ईश्वरत्वेनान्यथापि करणसम्भवात्। मर्य्यादाविपरीतस्वरूपत्वात् पुष्टिमार्गस्य न काचनात्वानुपपत्तिर्भावनीया। तस्या अत्र भूषणत्वात्। अतएवैकेषामिति दुर्लभाधिकारः सूचितः।

## यदेव विद्ययेति हि ॥ १८ ॥

ननु यदेव विद्यया करोतीति श्रुत्वा विद्यापूर्व्वकं कर्म्मकरणे वीर्य्यातिशयः फलं श्रूयतेऽतो ब्रह्मविद्यावतोऽपि तथात्वस्योचितत्वा*दुत्तरस्याश्लेष इति यदुक्तं तन्नोपपद्यते इति प्राप्त आह। यदेवेति। हि यस्माद्धेतोस्त्वया यदेव विद्यया करोति श्रद्धयोपनिषदेति श्रुतिरेव ब्रह्मविदोऽपि कर्म्मोत्पत्तिप्रसंजिकात्वेनोदाहृता सा तु न तत्समर्था। तथाहि। ओंमित्येतदक्षरमुद्गीथमुपासीतेत्युपक्रम्य तस्य रसतमत्वं मिथुनरूपत्वमनुज्ञाक्षरत्वं त्रयीप्रवृत्तिहेतुत्वञ्च निरूप्यैतदग्रे यदेव विद्ययेत्याद्युक्तेति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवतीत्युपसंहारादुद्गीथोपासनाविषयमेव यदेव विद्ययेति वाक्यमिति ज्ञायते। तेनोक्तरसतमत्वादिप्रकारकोपासनानां मध्ये यदेव विद्यया करोति तदेव वीर्य्यवत्तरं भवतीति तदर्थं इति न ब्रह्मविद्यागन्धोऽपीति न सा शङ्काऽत्र सम्भवतीत्यर्थः। यद्वा। उक्ताशङ्कानिरासायैवाह यदेवेति। ब्रह्मविद्भि प्रारब्धक्षयायैव कर्म्म क्रियते तत्त्वन्यकृतात् कर्म्मणः सकाशात् सवासनतन्नाशनाद्वीर्य्यवत्तरं भवत्येवेति नानुपपत्तिः काचिदित्यर्थः। यद्वा। ननु पुष्टिमार्गीयस्य प्रारब्धस्यापि भोगं

---

* तथात्वस्योचितत्वात् तदुत्तरस्येति ख।

विनैव नाश इति श्रुत्वाऽसम्भावनां कुर्वाणं प्रति कैमुतिकन्यायेन तत्परिहारमाह । यदेवेत्यादि । जीवनिष्ठा विद्या हि भगवद्ज्ञानशक्तेरंशभूता । एवं सति यत्र धर्मसम्बन्धिसम्बन्धादन्येभ्योऽतिशयं कर्मणि वदति श्रुतिस्तत्र साक्षाद्धर्मिसम्बन्धेऽतिशयितकार्यसम्पत्तौ कथमसम्भावनां कर्त्तुमुचितेति निगूढाशयः । अतएव हेतुवाची हि शब्दः ।

भोगेन त्वितरे क्षपयित्वाऽथ सम्पद्यते ॥ १९ ॥

पुष्टिमार्गीयफलप्राप्तौ प्रतिबन्धाभावं सोपपत्तिकमुक्त्वा तत्प्राप्तिप्रकारमाह । इतरे अग्रे प्राप्यालौकिकदेहाद्भिन्ने स्थूललिङ्गशरीरे क्षपयित्वा दूरीकृत्य अथ भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरं भोगेन सम्पद्यते । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति श्रुत्युक्तेन भोगेन सम्पद्यत इत्यर्थः । श्रुत्यर्थस्त्वानन्दमयाधिकरणे निरूपितः । अलौकिकत्वं विनोक्तदेहं विना चोक्तफलप्राप्तेर्व्यवच्छेदकस्तुशब्दः ।

इति श्रीवेदव्यासमतवर्त्तिश्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्राणुभाष्ये चतुर्थस्याध्यायस्य प्रथमः पादः समाप्तः ।

---

## द्वितीयः पादः।

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

पूर्व्वपादे लौकिकशरीरे चपयित्वाऽलौकिकं तत्प्राप्य-फलेन सम्पद्यत इति निरूपितं। अथाचेदं चिन्त्यते। भक्तस्य सूक्ष्मशरीरस्य चपणं नाम किं तत्स्वरूपनाशनमुत मणि-स्पर्शादयश्चामीकरत्वमिव तस्यैवालौकिकत्वसम्पादनं भग-वदनुग्रहादिति। तत्रोत्तरएव पचः साधीयानिति भाति। तथाहि। यथा पूर्व्वं संसारिणएव जीवस्य तदनुग्रहात् पूर्व्वावस्थापगमो मुक्त्यवस्था चोच्यते तथात्रापि वक्तुमुचित-त्वात्। न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते इति श्रुतिस्तु जीवस्य सायुज्यमुक्तिकाले तत्प्राणादीनामपि तथै-वाह। अतएवाग्रे ब्रह्मैव सन् ब्रह्माप्येतीत्युच्यते। पुष्टिमार्गीय-स्योत्क्रमुत्क्रभावान्नेयं तद्विषयिणीति प्राप्ते प्रतिवदामः। ब्रह्मां-शत्वेन जीवस्यानन्दात्मकत्वान्निर्दोषस्वरूपत्वान्नित्यत्वाच्च दोषा-णाञ्चागन्तुकत्वात् तदपगमे तस्य तथात्वमुचितं प्राणादयस्तु न तादृशा इति तद्दृष्टान्तेनात्रापि तथात्वं न वक्तुं शक्यं। देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनामिति श्रीभागवतवा-क्याच्च। नच लौकिकत्वविशिष्टदेहादिरत्र निषिध्यत इति वाच्यं। सामान्यनिषेधे बाधकाभावात्। न च तदनुभवएव बाधक इति वाच्यं। भगवत इव तदीयानामपि तेषां तथात्वे बाधका-

भावात्। नन्वागन्तुकत्वमेव बाधकमिति चेत्। मैवं। यथा*
वैकुण्ठस्याक्षरात्मकत्वेनानागन्तुकत्वेन नैसर्गिकतद्गताखिलवस्तु-
रूपत्वेन सामीप्यादिमुक्तिं प्राप्नुवतां भक्तानां देहेन्द्रियादि-
रूपमप्यनागन्तुकमेव वैकुण्ठप्राप्तिमात्रेण शुद्धजीवानां सम्पद्यते
तदीयत्वेन तत् फलतीति यावत् तथा पुरुषोत्तमलीलाया अपि
पुरुषोत्तमात्मकत्वात् तत्राङ्गीकारमात्रेण प्राचीनाशेषप्राक-
ृतिकधर्म्मनिवृत्तौ शुद्धजीवस्य पुरुषोत्तमलीलात्मकदेहादिरपि
तदीयत्वेन सम्पद्यत इति नानुपपन्नं किञ्चिदित्यवहितोऽ-
वेहि। अयमेवार्थो वाजसनेयिशाखायामथाकामयमान इत्युप-
क्रम्यात्मकाम आप्तकामो भवति न तस्मात् प्राणा उत्क्राम-
न्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीत्यन्तेन वाक्येन
निगद्यते। अत्र प्राणशब्देन प्राणाः सर्व्वेन्द्रियाणि चोच्यन्ते।
आत्मकामशब्देन भगवद्वाचकात्मपदग्रहणेन भक्तस्य स्नेहातिशय-
जनितप्रभुदिदृक्षात्यतिशयस्तादृशो येन मरणमेव सम्पद्येत यदि
प्रभुप्राकट्ये क्षणमपि विलम्बः स्यादतो भगवत्प्राकट्येनैवात्म-
स्थितिरिति ध्वन्यते। भक्तिमार्गे प्राकट्यस्यैव परमफलत्वेन
तद्दर्शनेनाप्तकामो भवति। ततः साक्षादाश्लेषादिकामनायां
प्राचीनदेहप्राणादेस्तदयोग्यत्वात् ते तत्रैव लीना भवन्ति।
बहिःप्रकटस्यैवान्तरपि प्राकट्यादुत्क्रमणाभाव उच्यते। आत्मा-
तिरिक्तस्य गतिमुक्त्वा तस्य तामाह। ब्रह्मैव सन् ब्रह्माप्येतीत्य-
नेन। उक्तरीत्या पुरुषोत्तमात्मकतल्लीलोपयोगिदेहेन्द्रियादि-
सम्पत्त्या ब्रह्मैव सन्न तु ब्रह्मातिरिक्तदेहादिमानपि। तादृशः

* व्यापि वैकुण्ठस्येति ख।

सन् ब्रह्म बृहत्त्वाद्बृंहणवत्त्वात् पुरुषोत्तमस्वरूपं प्राप्तो भवतीत्यर्थः। अन्यथा जीवस्य ब्रह्मांशत्वेनानन्दांशाविर्भावेन च ब्रह्मत्वे प्राणादिलयोक्त्या तदितरव्यवच्छेदे चानुक्तसिद्धे सति ब्रह्मैव सन्निति न वदेत्। अतएवैतदग्रे श्लोकोक्तिरथ मर्त्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति। मृतिधर्म्मवच्छरीरं हि मर्त्त्यं तद्वत्त्वेन जीवोऽपि तथोच्यते। तथाचायं पूर्व्वं तादृशएव। अथ पुष्टिलीलाप्रवेशानन्तरममृत उक्तरूपशरीरवान् भवति। ततोऽत्र अस्मिन्नेव शरीरे ब्रह्म सम्यगश्नुते भगवता क्रियमाणलीलारसमनुभवतीत्यर्थः। भगवान् बादरायण इमामेव श्रुतिं विषयीकृत्य तत्रोक्तप्राणानां लय एकदैवोत क्रमनियमोऽस्तीति संशये निर्णयमाह। वाङ्मनसीति। तत्र हेतुर्दर्शनादिति। एतदुक्तं भवति। भक्तेः स्नेहात्मकत्वात् तस्य प्रभुप्राकट्यफलकत्वात्तदौत्कण्ठ्ये तस्यावश्यकत्वादयं मां पश्यत्विति प्रभ्विच्छया तस्मिन् सम्पन्ने चक्षुर्भ्यां मनसा च तद्रूपामृतमनुभवतः स कोऽप्युत्कटोभावः समजनि येन प्रभुणा सह सर्व्वेन्द्रियव्यापारकृतीच्छा समभूत्तत्र तेषामसामर्थ्याद्भगवदानन्दसम्बन्धिमनःसम्बन्धेन तं प्राप्स्याम इति तत्रैव सङ्गतास्तेनानन्देन सम्पन्ना जाताः अयमेवार्थोऽनेन सूत्रेणाग्रिमेण चातएव सर्व्वाण्यन्विति सूत्रेण निरूप्यते। दर्शनानन्तरमादौ सहसम्भाषणेच्छैव जन्यत इति वाङ्मनसि सम्पद्यत इति छान्दोग्ये स्फुटोक्तं सम्मत्या चादौ सैवोक्ता। एवं सति वाङ्मनसि सङ्गता सती भगवदानन्देन सम्पद्यत इति सूत्रार्थः सम्पद्यते। दर्शनाभावेऽपि वेणवादिशब्दादपि तथा सम्पद्यत इति हेत्वन्तरमाह शब्दाच्चेति।

## अतएव च सर्व्वाण्यनु ॥ २॥

अतएव दर्शनाच्छब्दाच्च हेतोः सर्व्वाणीन्द्रियाणि अनु सान्निध्यात् । वाचः पश्चान्मनसि सङ्गतानि भगवदानन्देन सम्पद्यन्त इत्यर्थः । केचित्तत्र छान्दोग्यस्थं वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामिति वाक्यं विषयत्वेनोक्त्वा सूत्रे वाक्यद्वयस्य तद्वृत्तिपरत्वं वदन्ति । सम्पत्तिं तन्नाशञ्च । तन्न साधीयः । तथाहि । वाक्यद्वयस्य वृत्तिपरत्वञ्चेच्छ्रुत्यभिमतं स्यात् सूत्रकारस्तदा तथैव वदेन्न तु तत्स्वरूपमेव वाक्यं । तन्निर्णयार्थमेव प्रवृत्तिः मुख्यार्थत्यागो लक्षणापत्तिश्च । किञ्चैवं मनसीति पदवैयर्थ्यं स्याद्विषयवाक्योक्तक्रमत्यागानुपपत्तिश्चेति ।

## तन्मनः प्राण उत्तरात् ॥ ३ ॥

पूर्व्वोक्तसर्व्वेन्द्रियवैशिष्टवन्मनः प्राणे सम्पद्यते न तु केवलं तत्र हेतुरुत्तरादिति । स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वा अन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सौम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयत इत्युक्त्वा तत्र हेतुमुत्तरेण वाक्येनाह प्राणबन्धनं हि सौम्य मन इति । तस्माद्धेतोस्तथेत्यर्थः ।

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

सर्व्वेन्द्रियविशिष्टमनोविशिष्टः प्राणोऽध्यक्षे पुरो हृदि वा प्रकटे भगवति सम्पद्यत इत्यर्थः । अत्र हेतुः । उपगमादिभ्य इति । उपगमोऽभ्युपगमः पुष्टिमार्गेऽङ्गीकार इति यावत् । ततस्तथेत्यर्थः । आदिपदाद्भगवद्वशीकरणसमर्थः स्नेहः प्रभ्वनिङ्गि-

तार्थत्यागस्तदनुरूपं भजनञ्च। अभ्युपगमे सिद्धे स्नेहादयोऽवश्यं भवन्त्येवेत्याशयेन तदादित्वमुक्तं। नोद्देशः कृतः। मर्य्यादामार्गेऽङ्गीकृतानान्तु मुक्तिपर्य्यवसायित्वेन मुमुक्षुत्वादुत्कटस्नेहासम्भवेन प्रभुप्राकट्यासम्भवात् स्वस्वप्रकृतौ सङ्घातलये शुद्धजीवस्य भगवदनुग्रहेण श्रवणादिरूपया तथाविधस्नेहरूपया च भक्त्या मुक्तिः सम्पद्यत इति वक्तेव तारतम्यमिति निगूढाशयेनेदमुक्तं। अभ्युपगमादयस्तु मुण्डकोपनिषत्सु पद्यन्ते। नायमात्मेत्युपक्रम्य यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वां। नायमात्मा बलहीनेन लभ्यो न च प्रमादात् तपसो वाप्यलिङ्गात्। एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधामेति उक्तं निगूढमाशयं प्रकटयति।

## भूतेषु तत्श्रुतेः ॥ ५ ॥

ननु मर्य्यादामार्गीयाणामप्येवमेव वागादिलय उतान्यथेति संशये निर्णयमाह। तेषान्ते भूतेषु लीयन्ते नतूक्तरीत्या भगवति। अत्र प्रमाणमाह। तच्छ्रुतेः। यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितञ्च रेतश्च निधीयत इति श्रुतेः। नचाविद्वद्विषयिणीयं श्रुतिरिति वाच्यं। याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात् प्राणाः क्रामन्त्याहो नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवलीयन्ते स उच्छ्वयत्याध्मायत्याध्मातोमृतः शेत इति पूर्ववाक्यात्। नह्यविदुषः प्राणानामनुत्क्रमः। तमुत्क्रामन्तं प्राणोऽनुत्क्रामतीत्यादिश्रुतेः। ननु यत्रास्य पुरुषस्येत्युप-

क्रम्य रेतश्च निधीयत इत्यन्ता श्रुतिरविद्वद्विषयिणीति मन्तव्यं। यत एतदग्रे क्वायं तदा पुरुषो भवतीति प्रश्ने याज्ञवल्क्यार्त्त-भागाभ्यां विचारितमुत्तरमुच्यते तौ ह यदूचतुः कर्म्म हैव तदूचतुरथ ह यत्प्रशसतुः कर्म्म हैव तत्प्रशसतुः पुण्यो वै पुण्येन कर्म्मणा भवति पापः पापेनेति। एतेन कर्म्माश्रयस्तिष्ठतीति निर्णयः सम्पद्यते। एवं सति प्राणानुत्क्रमणोक्त्या सङ्घातलयोक्त्या च विद्वद्विषयत्व*मत्रावसीयते। यतस्तस्यैवोक्तद्वयं सम्भवति। अग्रिमश्रुत्युक्तकर्म्माश्रयत्वञ्च तस्मिन् विरुद्धमतः पूर्व्वोत्तरविरो-धाद्विषयानिश्चये प्राप्ते प्रतिवदामः। मर्य्यादामार्गीयविद्व-द्विषयिण्येवेयं श्रुतिरिति। अतएव प्रश्ने क्व तदा पुरुषो भव-तीत्येतावतैव चारितार्थ्येऽपि साधारणपुरुषव्यावृत्त्या मर्य्यादा-मार्गीयतत्प्रापकमयमिति पदं तस्यैवोपक्रान्तत्वात् तथा। अग्रिमविचारितोऽर्थोऽपि तद्विषयक† एवेति बुध्यस्व। ननूक्तं बाधकमिति चेत् हन्त श्रुतिशिरःसमाकलितमाकलय। मर्य्यादामार्गे हि विधिप्राधान्यं तथैव तन्निर्म्माणात्‡। तत्र ह्येवं कृत एवं फलं दास्ये नत्वकृतेऽपीति भगवदिच्छा अतः कर्म्म प्रधानं। एवं सत्यार्त्तभागस्यायमाशयः। वागादिरेतोऽन्त-लयेन प्रारब्धस्यापि तदा नाशात् शुद्धं जीवं विध्यविषयं कदाचित्पुष्टौ प्रवेशयति नवेति संशयेन तदायं किं§ मर्य्यादा-मार्गे एवोत पुष्टावपि प्रवेशितो भवतीति प्रश्नः। तदाऽस्यार्थ-

---

* विद्वद्विषयत्वमारभ्य कर्म्माश्रयत्वञ्चेत्यन्तं खपुस्तके नास्ति।

† तद्विषय एवेति खं।

‡ विधिप्राधान्यात् तथैव निर्म्माणात् इति खं।

§ तदायं क्व इति खं।

स्वेश्वरेच्छाचारीतिमविदुषो दुर्ज्ञेयत्वं जानन्ती स्वयमेव यदव-धारितवती तदपि रहस्यमिति स्फुटमनुक्त्वा श्रुतिः पर्य्यवसित-मर्थमुक्तवती तौ हेत्यादिना । अत्र कर्म्मपदं मर्य्यादामार्गपरं । तथाच मर्य्यादामार्गएव तस्य स्थितिरित्यर्थः सम्पद्यते । मुक्तएव भवतीति यावत् । अतएव तत्प्रशंसापि यत ईश्वरत्वेन सर्व्व-करणसमर्थोऽपि तद्दाने तदपेक्षते । अत्र हेतुत्वेन मर्य्यादा-मार्गस्वरूपमुक्तं पुण्यो वा इत्यनेन* । ननु मर्य्यादामार्गीयौ भक्तौ ज्ञानी च भवत उक्तनिर्णयस्तु ज्ञानमार्गीयविषयएव भक्तं तादृशमपि कदाचित् पुष्टावपि प्रवेशयतीत्याशङ्का तन्नि-र्णयमाह ।

नैकस्मिन् दर्शयतो हि ॥ ६ ॥

एकस्मिन् ज्ञानिनि भक्ते वा मर्य्यादानियमो न । किन्तू-भयोरपि । तत्र हेतुर्दर्शयत इति । यतो याज्ञवल्क्यार्त्तभागौ ज्ञानिभक्तसाधारण्येन मर्य्यादानियमं दर्शयत उक्तरीत्या तौ हेत्यादिना । अन्यथा प्राकृताङ्गीकारोऽन्यथा† भवेदित्युपपत्तिर्हि-शब्देन सूच्यते । पूर्व्वोक्तपूर्व्वोत्तरश्रुतिविरोधपरिहारान्यथा-नुपपत्तिरत्र मूलमिति ज्ञेयं । केचित्तूपसंहृतेषु वागादिषु शरीरान्तरप्रेप्सासामयिको जीवः क्वायं तदा पुरुष इति प्रश्न-विषय इति वदन्ति । तन्न साधीयः । तमुत्क्रामन्तं प्राणोऽनुत्-क्रामति प्राणमनूत्क्रामन्तं सर्व्वे प्राणा अनूत्क्रामन्तीति श्रुति-र्भाविदेहान्तरजीवस्य प्राणानामिन्द्रियाणाञ्च सहैवोत्क्रमणं

---

* इत्यादिना इति ख ।

† प्राकृताङ्गीकृतिरन्यथा इति ख ।

वदतीति वागादिलयस्य तत्रासम्भवान्नोक्तस्य प्रश्नविषयत्वं वक्तुं शक्यं। पूर्व्ववाक्येऽत्रैव समवलीयन्त इत्युक्तत्वाच्चातोऽस्मदुक्त एव मार्गोऽनुसर्त्तव्यः। एतेन नायं परविद्यावान् यतोऽमृतत्वमेव तत्फलमिति* तच्च देशान्तरानायत्तमित्युत्क्रमणापेक्षकर्म्माश्रयत्वञ्च न स्यात् किन्त्वपरविद्यावांस्तस्यास्तु ब्रह्मलोकावधिफलमिति कर्म्माश्रयत्वोत्क्रमणादिकं सम्भवतीत्यपि निरस्तं वेदितव्यं।

## समाना चासृत्युपक्रमादमृतत्वञ्चानुपोष्य॥ ७॥

मर्य्यादापुष्ट्योर्न कदाचिदन्यथाभाव इति यदुक्तं तत्र हेत्वपेक्षायां वस्तुस्वरूपमेव तथेति बोधयितुमाह। समानेत्यादि। अत्रायमाशयः। साधनक्रमेण मोचनेच्छा हि मर्य्यादामार्गीया मर्य्यादा। विहितसाधनं विनैव मोचनेच्छा पुष्टिमार्गमर्य्यादा। तथा सति सदैकरूपत्वं तयोर्युक्तमिति। एतदेवाह सृतिः संसृतिर्जीवानां स्वस्मात् पृथक्कृतानामविद्ययाऽहन्ताममतास्पदीकरणं तदुपक्रम आरम्भस्तं मर्य्यादीकृत्य मुक्तिपर्य्यन्तमुक्तरूपा मर्य्यादा समाना सदैकरूपा मध्ये नान्यथा भवतीत्यर्थः। एवमेवानुपोष्य व्रतमकृत्वाऽमृतत्वमपि पुष्टिमार्गे समानमित्यर्थः। अत्रोपोषणपदमशेषमुक्तिसाधनोपलक्षणं। एवं प्रासङ्गिकमुक्त्वा प्रकृतं परामृश्यते। सोऽध्यक्ष इति सूत्रेण पुष्टिमार्गीयभक्तसङ्घातस्य भगवत्येव लय इत्युक्तमक्रमेण तेन मर्य्यादामार्गीयभक्तसङ्घातस्य भूतेषु लयमुक्त्वा प्रश्नानन्तरं शुद्धजीवस्य तस्य मुक्ति-

* तत्फलमिति ख।

रेव भवतीति वक्तव्ये सत्याह सौम्य इत्थमित्यादिना स्वाशय-मन्येष्वप्रकटयन्तौ कर्म्म यन्निरूपितवन्तौ तत्कुत इत्याशङ्का तयोराशयं निगूढ़ं प्रकटयति ।

## तदाऽपीतेः संसारव्यपदेशात् ॥ ८ ॥

तदा नित्यलीलान्तःपातलक्षणपुष्टिमार्गीयमुक्तिदशायां मर्य्यादा-मार्गीयाया अपीतेर्मुक्तेः संसारत्वाभावेऽपि पुरुषोत्तमभजना-नन्दानुभवाभावात् संसार इत्येव पुष्टिमार्गे व्यपदेशो यतः क्रियतेऽतस्तदभिसन्धाय तया रीत्या निरूपणं । अतएव श्री-भागवते श्रीशिववचनं गीयते

नारायणपराः सर्व्वे न कुतश्चन बिभ्यति ।
स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन इति ।

श्रीभगवद्गीतास्वपि देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपीति वाक्ये मर्य्यादामार्गीयभक्तमुक्तेरितरसाधारण्यसु-च्यते। ननु संसारवन्मुक्तेरपि हेयत्वं यत्र तादृशं चेत् पुष्टिमार्गीयं तत्त्वं तदा मुक्तेः पुरुषार्थत्वबोधिकायाः श्रुतेः प्रतारकत्वमापत-तीति तद्बोधकप्रमाणानां तत्स्तुतिमात्रपरत्वमेवेति प्राप्त आह ।

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

पुष्टिमार्गीयं तत्त्वं सूक्ष्मं दुर्ज्ञेयमित्यर्थः । अत्रायमाशयः । पुष्टिमर्य्यादामप्यतिक्रम्य पुष्टिपुष्टौ प्रवेशे तत्तत्त्वमनुभवविषयो भवति नान्यथा । तत्र प्रवेशस्त्वतिदुरापोऽतिशयितानुग्रहेतरा-साध्यत्वादत उक्ततराज्ञेयमेव तद्भवति । तेषान्तु मुक्तिरेव फलं तस्या एवेष्टत्वाद्रागिणां स्वर्गादिवत् । इष्टफलाप्राप्तौ हि प्रता-रकत्वमन्यथा प्रवृत्तिमार्गीयफलबोधिकाया अपि श्रुतेः प्रतार-

कत्वं स्यात्। इच्छा चाधिकारानुसारिणीति नानुपपन्नं किञ्चि-दिति। नन्वेवं विधार्थास्तित्वे किं मानमित्याकाङ्क्षायामाह। प्रमाणत इत्यादि। प्रमाणं श्रुतिः सा तु यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति एतꣳ ह वाव न तपति। किमहं साधु नाकरवं। किमहं पापमकरवमिति। अत्र पूर्व्वार्द्धेन दुर्ज्ञेयत्व-मुत्तरार्द्धेन तत्सत्ता च बोध्यते। अन्यथा मनसोऽप्यप्राप्यस्य वेदन-कथनं विरुद्धं स्यादतो दुर्ज्ञेयत्वेनैव धर्म्मिग्राहकमानसिद्धं तदित्यर्थः। चकारात् तादृशानामनुभवः परिगृह्यते। तर्हि ब्रह्मविदामिव तादृशानां भक्तानामपि स्वमार्गोपदेशनं क्वचित् श्रूयेत न चैवमतः पूर्व्वोक्तं न साधीय इति भातीत्युत्सूत्रमाशङ्क्य तत्र हेतुमाह।

## नोपमर्द्दनातः॥ १०॥

उपदेशनं तदा स्याद्यदि ब्रह्मविदामिव तेषां स्वास्थ्यं स्यात् यतस्तेषां विरहदशाप्रियसङ्गमदशा चेति दशाद्वयमेव भवति नान्या। पूर्व्वस्यास्तस्यास्त्वतिदुःसहत्वेन सर्व्वेषां भावानामुप-मर्द्देन तिरोधानेनोपदेशो न भवतीत्यर्थः। सङ्गमे तु अतः पुरः-प्रकटपरमानन्दस्वरूपाद्भगवत एव हेतोरुपदेशोऽन्यस्मै न भवती-त्यर्थः। न हि भगवदग्रे स सम्भवतीति भावः। ननु रसो वै सः रसꣳ ह्येवायं लब्ध्वाऽनन्दीभवतीत्युपक्रम्यैष ह्येवानन्दया-तीति श्रुतेरुक्तरूपानन्दप्राप्तौ दुःसहविरहतापोऽशक्यवचनः आनन्दतिरोधानएव तत्सम्भवात्। तद्धेतोरसम्भवात् सम्भवे तु तत्प्राप्तिरेव न स्यादिति प्राप्त उत्तरं पठति।

## अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

आनन्दात्मकरसात्मकस्यास्यैव भगवतएव धर्म्म उष्मा विरह-ताप इत्यर्थः । विरोधपरिहारायाह । उपपत्तेरिति । इदमुक्तं भवति । भगवद्विरहस्यासर्व्वसाधारणत्वेऽपि* स्थायिभावात्मक-रसरूपभगवत्प्रादुर्भावो यस्य† हृदि भवति तस्यैव तदप्राप्तिज-स्तापस्तदनन्तरं नियमतस्तत्प्राप्तिश्च भवति न त्वतथाभूत-स्येत्यन्वयव्यतिरेकाभ्यामुक्तरसस्यैवैष धर्म्म इति निश्चीयते। तस्य वस्तुत एव तथात्वात्स तापोऽपि रसात्मकएव ।

## प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

ननु न पश्यो‡ मृत्युं पश्यति न रोगं नोत दुःखमिति श्रुत्या§ दुःखप्रतिषेधस्तादृशे भक्ते क्रियत इति तस्य दुःखित्वं न वक्तुं शक्यमित्याशङ्क्य प्रतिषेधति नेति। कुतः शारीरात् । शरीर-सम्बन्धिनो हेतोर्यद्दुःखं कर्म्मजनितमिति यावत् तस्यैव श्रुतौ प्रतिषेधान्नात्रानुपपत्ति¶रित्यर्थः । एतेन दुःखत्वेन कर्म्मजन्य-त्वानुमानमपि निरस्तं वेदितव्यं । लौकिकएव दुःखे तज्जन्यत्व-नियमात् ।

## स्मरन्त्येकेषां ॥ १३ ॥

एकेषां शाखिनां भगवत्स्वरूपलाभानन्तरं दुःखतन्निव-

---

* सर्व्वसाधारणत्वेऽपीति खं ।

† यस्य हीति खं ।

‡ ननु प्रपश्यो मृत्युमिति खं ।

§ इत्यादि श्रुत्या इति खं ।

¶ नानुपपत्तिरिति खं ।

त्तनलक्षणोऽर्थः स्पष्टं पठ्यते। तथाहि। रसोवै सः। रसं ह्येवायं लब्ध्वाऽनन्दीभवति। कोह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति। अत्र रसात्मकभगवत्स्वरूपलाभे सत्यानन्दवत्त्वमुक्त्वा तस्यैव जीवनहेतुत्वं परमानन्दहेतुत्वं चोच्यते। मरणहेतूपस्थित्यभावे जीवनहेतुत्वं न वदेत्। स रसस्तु संयोगविप्रयोगभावाभ्यामेव पूर्णो भवत्यनुभूतौ नैकतरेण। तत्र विरहतापस्यात्युपमर्दित्वेन तदा प्राणस्थितिरपि न स्याद्यदि रसात्मको भगवान् हृदि न स्यादित्याशयेनाह कोह्येवान्यादिति। यत् यदि एषः हृदि स्फुरद्रूप आकाशो भगवान्न स्यात् कस्तदाऽन्यात्। अन प्राणने। को वा जीवयेन्न कोऽपीत्यर्थः। तादृशस्य भगवत्स्वरूपातिरिक्तान्न जीवनमिति ज्ञापनाय सामान्यपदं। ब्रह्मानन्दाधिकपूर्णानन्दविरहासन्नमरणनिवारणासामर्थ्यमतादृशस्योचितमेवेति ज्ञापनाय हि शब्दः। तादृशस्य जीवनसम्पादनं प्रभोरावश्यकमिति ज्ञापनायैवकारः। तापात्मकस्याप्यानन्दात्मकत्वमेवेति ज्ञापनायानन्दपदं। तदा प्रलापगुणगानादयो ये भवन्ति तेऽपि तद्धर्मा एव। नीलाम्बुदश्यामोऽतिक्लेशवशाद्धृदयादपगच्छत्विति भावेऽपि हृदयान्नापसारयितुं शक्य इति ज्ञापनाय चाकाशत्वमुक्तं। तदनन्तरं प्रकटीभूय तदन्यः को वा प्रकर्षेण दर्शनस्पर्शाश्लेषभाषणादिभिः स्वरूपानन्ददानेनान्यात् पूर्व्वतापनिवृत्तिपूर्व्वकमानन्दपूर्त्तं कुर्य्यादित्यर्थः। रसं ह्येवायं लब्ध्वाऽनन्दीभवतीति पूर्व्ववाक्येनैवान्यव्यवच्छेदपूर्व्वकं भगवत्प्राप्तेरानन्दहेतुत्वप्राप्तावपि यत् पुनराह तत्रापि व्यतिरेकमुखेन तत्रापि जीवनहेतुत्वं तदपि सामान्यविशेषाभ्यां

वारद्वयं तेन विरहसामयिकोक्तरूपएवार्थः श्रुतेरभिप्रेत इति निश्चीयते। अन्यथा मरणहेत्वनुपस्थितौ जीवनहेतुत्वं न वदे-दित्युक्ततदवस्थापन्नः को वा पुरुषो जीवेदिति वार्थः।

### स्मर्य्यते च ॥ १४ ॥

भगवद्भावस्य मरणहेतुत्वं तेनैव च जीवनं तस्य ब्रह्मादि-दुरापत्वञ्च श्रीभागवते स्मर्य्यते मन्मनस्का मत्प्राणा मदर्थे त्यक्त-दैहिकाः यत्यक्तलोकधर्म्माश्च मदर्थे तान्बिभर्म्यहमित्युपक्रम्य धारयन्त्यथ कृच्छ्रेण प्रायः प्राणान् कथञ्चनेत्यादि श्रीप्रभु-वचनं। श्रीमदुद्धववचनञ्च

> एताः परन्तनुभृतो भुवि गोपवध्वो
> गोविन्दएव निखिलात्मनि रूढ़भावाः।
> वाञ्छन्ति यं भवभियो मुनयोवयञ्च
> किं ब्रह्मजन्मभिरनन्तकथारसस्य ॥ इत्यादि

तेन भगवतएव जीवनहेतुत्वं भावस्य च परमपुरुषार्थ-त्वन्दुरापत्वञ्च स्फुटमवगम्यते।

### तानि परे तथाह्याह ॥ १५ ॥

ननु हृदि वहिश्च रसात्मकभगवत्प्राकट्यं तद्दर्शनजनितो विरहभावस्तज्जनितस्तापस्तेन मरणोऽस्थितिस्तन्निवर्त्तनं तदौत्-कण्ठ्यं तदा प्राकट्यं ततः पूर्णस्वरूपानन्ददानादिकं लोके क्वचि-दपि न दृष्टं श्रुतं वा वैकुण्ठे याति कुत इत्याशङ्कायामाह तानि उक्तानि वस्तूनि परे प्रकृतिकालायतीते वैकुण्ठादप्युत्कृष्टे श्रीगोकुलएव सन्तीति शेषः। तत्र प्रमाणमाह। तथाह्याह श्रुतिः। ऋग्वेदे पठ्यते ता वां वास्तून्युश्मसि गमध्यै यत्र गावो

भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि। ता तानि। वां भगवत्तदन्तरङ्गभक्तयोः सम्बन्धीनि वास्तूनि वस्तूनि गमध्यै प्राप्तुमुश्मसि कामयामहे। तानि कानीत्याकाङ्क्षायां गूढ़ाभिसन्धिमुद्घाटयति। यत्र श्रीगोकुले गावो भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयोमृगाश्च वसन्तीति शेषः। अयासः शुभावहाः। तत् उक्तगुणविशिष्टं उरुगीयत इत्युरुगायस्तस्य। गोप्यो हि सततं तं गायन्ति। अतएव तदादिभक्तेषु कामान् वर्षतीति वृषा तस्य परमं प्रकृतिकालाद्यतीतं पदं स्थानं भगवतो वैकुण्ठं भवति। तत्रैतादृशलीलाऽभावेन तस्मादपि परममुत्कृष्टं। अत्र भूमाववभाति प्रकाशत इत्यर्थः। तथापि स्वदृग्गोचरो न भवतीति खेदेन अहेत्याह श्रुतिः। उरुगीयते परं सर्व्वत्र कामवर्षणं भक्तेष्वत्रैवेति तात्पर्य्येण वा विशेषणद्वयमुक्तं। यमुनापुलिनतदुपवननिकुञ्जगह्वरप्रदेशाद्रिसान्वाद्यात्मकत्वेन भूरि बहुरूपं। तथा चैतादृशं यत् परमं पदमवभाति तत्सम्बन्धीनि वास्तूनि कामयामह इति वाक्यार्थः सम्पद्यते। ते पदार्था* इति वक्तव्ये सति तानीत्युक्तिर्या सा विषयवाक्यानुरोधादिति ज्ञेयं। पुरुषोत्तमसम्बन्ध्यर्थानां तत्प्राकट्यस्थानएव प्राकट्यं युक्तमिति हि मन्देनाह।

## अविभागो वचनात्॥ १६॥

ननु लीलाया नित्यत्वेन तन्मध्यपातिनां तद्दर्शनं यथा नित्यं तथा तादृक्साधनाभावेऽपि निजानुकम्पया कदाचित् कमपि भक्तं तत्र नयति चेत् तदा कञ्चित्कालं स्थापयित्वा† ततस्तं

* पदार्था इति खं।

† स्थापयित्वा तत्र इति ख-पुस्तके नास्ति।

वियोजयति नवेति संशयः। तोषस्य कादाचित्कत्वात् तत्साध्या तत्र स्थितिरपि तथैवेति वियोजयतीति पूर्व्वः पक्षस्तत्र सिद्धान्तमाह। तत्र प्रवेशितस्य तस्मादविभागएव। कुतः। वचनात्। तैत्तिरीयक उक्तार्गनन्तरमेव विष्णोः कर्म्माणि पश्यतेत्यृचा तत्र, कृतानि कर्म्माण्युक्का तदग्रे वदति विष्णोः परमं पदꣳ सदा पश्यन्ति सूरय इति। पुरुषोत्तमस्वरूपवित्त्वं सूरित्वं तत्र भक्त्यैवेति सूरयो भक्ताएव तेषां सदा दर्शनमुच्यते। अन्यथा लीलानित्यत्वेनैव पूर्व्वग्रन्थान्तत्र स्थितगवादीनां प्रभुकर्म्मविषयाणाञ्च भक्तानां सदा तद्दर्शनस्य प्राप्तत्वादिदं न वदेत्तस्मादविभागएव। एतेनापि लीलानित्यत्वं* सिध्यति। एतद्यथा तथा विद्वन्मण्डने प्रपञ्चितं। एवं पुष्टिमार्गीयभक्तवृत्तान्तमुक्का ज्ञानमार्गीयस्य तमाह।

**तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥**

पूर्व्वं भूतेषु तच्छ्रुतेरित्यादिना मर्य्यादामार्गीयस्य वागादिलय उक्तोऽधुना तस्य जीवात्मन उत्क्रमणप्रकार उच्यते। स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामतीति† श्रुतिस्तस्यात्मन ओक आयतनं हृदयं तदग्रं पूर्व्वं प्रज्वलति पूर्व्वं तथाऽप्रकाशमानमपि तदा प्रकाशत इति यावत्। तदा तत् प्रकाशितं द्वारं निर्गमनमार्गो यस्य तादृश उत्क्रामति।

---

* लीला नित्यमिति वा पाठः।

† अन्वक्रामतीति ख ।

यतः श्रुतिस्तथाह। तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन*
प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टोवा मूर्द्धो वेत्यादि। यद्य-
प्येतावत् सर्व्वजीवसाधारणं तथापि विद्वांस्तु नेतरवदितर-
नाड्या निष्क्रामति किन्तु शताधिकया। एकशततम्या नाड्या
मूर्द्धन्या निष्क्रामति। शतञ्चैका हृदयस्य नाड्यस्तासां मूर्द्धानमभि-
निःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे
भवन्तीति यतः श्रुतिराह। अत्र हेतुमाह हार्दानुगृहीत इति
हेत्वन्तर्गर्भं विशेषणं। गुहां प्रविष्टौ परमे परार्द्धे इति श्रुते-
र्हृदयाकाशसम्बन्धीयः परमात्मा तदनुग्रहात् तथैव भवती-
त्यर्थः। अनुग्रहे हेतुर्विद्यासामर्थ्यादिति। तस्या विद्यायाः
शेषभूताङ्गभूता या गतिः प्रव्रजनरूपा। तच्छेषभूतैव या भग-
वत्स्मृतिपरम्परा च ताभ्याञ्च यो भगवदनुग्रहस्तेन तथेत्यर्थः।

## रश्म्यनुसारी ॥ १८ ॥

अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति
शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल
इत्युपक्रम्याग्रे पठ्यते। तमभित आसीना आहुर्जानासि मां
जानासि मामिति। स यावदस्माच्छरीरादनुत्क्रान्तो भवति
तावज्जानात्यथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभि-
रूर्द्ध्वं आक्रमत इति। अत्र तमभित इत्याद्युक्तेः सर्व्वसाधा-
रणुत्क्रान्तिः प्राप्यते। पूर्व्वमादित्यत्वेनोक्तस्य पिङ्गलस्य रश्मि-
भिरूर्द्ध्वाक्रमणञ्च तथा। अत्र संशयः। ओकोऽग्रज्वलनादेरितर-

* तेन प्रद्योतेनेति ख-पुस्तके नास्ति।

साधारण्येपि यथा हार्दानुग्रहाद्विलक्षणा गतिर्विदुष उक्ता तथा रश्म्यनुसारित्वमपीतरसाधारणमुतास्मिन्नेवेति। तत्रावधारण-माह। रश्म्यनुसारी निष्क्रामत्ययमेवेति।

निशि नेति चेन्न सम्बन्धस्य यावद्देह-
भावित्वाद्दर्शयति च ॥ १९ ॥

विदुष उत्क्रमणे हार्दानुग्रहकृतो यथा* विशेषस्तथा कालविशेषकृतोऽपि विशेषो भविष्यतीत्याशङ्क्य तन्निरासमाह। तत्राहोरात्रकृतोऽयनकृतो वा स भवेत् तत्राद्यकृतो नास्तीत्याह नेति। तत्र हेतुः सम्बन्धस्येत्यादि। अनुग्रहहेतुभूतो यः पूर्वोक्तो गत्यनुसृतिसम्बन्धस्तस्य यावद्देहभावित्वात् तत्कार्य्यस्यानुग्रहस्यापि तथात्वात् कालस्याप्रयोजकत्वमित्यर्थः। अत्र प्रमाणमाह। दर्शयति यतः श्रुतिः†। तमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्तीति। हार्दानुग्रहस्य मुक्तिहेतोर्विद्यमानत्वादयनविशेषोऽप्यप्रयोजक इत्याह।

अतश्चायनेऽपि दक्षिणे ॥ २० ॥

स्पष्टार्थमिदं। ननु यत्र काले त्वनावृत्तिमिति कालप्राधान्येनोपक्रम्य

अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदोजनाः॥

इति भगवद्वाक्याद्ब्रह्मविदोऽप्युक्तकालापेक्षास्तीत्याशङ्क्य विषयभेदेन समाधत्ते।

---

* यो विशेष इति ख'।

† दर्शयति श्रुतिरिति ख'।

योगिनः प्रति स्मर्य्यते स्मार्त्ते चैते ॥ २१ ॥

ज्ञानमार्गाद्योगमार्गो हि भिन्नः। तथाच योगिनमुद्दिश्यैव कालविशेषस्य गतिविशेषहेतुत्वं स्मर्य्यते न तु ज्ञानमार्गीयस्य श्रौतस्य इतरनिरपेक्षत्वात्। न च योगसांख्ये अपि श्रौते एवेति वाच्यं। यतः स्मार्त्ते एते। चो हेत्वर्थे। एते योगसांख्ये। अग्नि-र्ज्योतिर्धूमो रात्रिरिति वाक्यद्वयोक्तगती वा। इदन्तु श्रुत्युक्त-देवयानपितृयानातिरिक्तमार्गमभिप्रेत्य समाहितं ते एव चेदत्राप्युच्येते शब्दभेदेन तदा न विरोधः।

इति श्रीवेदव्यासमतवर्त्तिश्रीवल्लभाचार्य्यविरचिते ब्रह्मसूत्रानु-भाष्ये चतुर्थाध्यायस्य द्वितीयः पादः।

---

## तृतीयः पादः ।

### अर्चिरादिना तत्प्रथितेः ॥ १ ॥

ननु ज्ञानमार्गीयस्यैव मर्यादामार्गीयभक्तस्याप्यर्चिरादि-मार्गेणैव गमनमुत सद्योमुक्तिरेव भवति* संशयः । तत्र यथा ज्ञानिनो नियमाभावस्तथात्रापीति प्राप्त आह । अर्चिरादि-मार्गेण । तस्य ज्ञानमार्गीयस्यैवौत्कर्षकथनात्† स एव तेन मार्गेण गच्छति न तु भक्तोऽपीत्यर्थः । तथाहि । पञ्चाग्निविद्याप्रकरणे तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिष-मभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमित्यत्रोपक्रमे भक्तातिरिक्तानेवाधिकृत्य तथागतिरुच्यते । स्मृतावप्यग्निर्ज्योतिरहः शुक्ल इत्यत्र ब्रह्मविदो जना इति वचनेन ज्ञानमार्गीयस्यैव स पन्था उच्यते ।

अथेदं चिन्त्यते । सामोपनिषत्सु पठ्यते । अथ या एता हृद-यस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति । शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल इत्युपक्रम्यादित्यरूपस्य पिङ्ग-लस्य रश्मिरूपत्वं नाडीनामुक्त्वाऽग्रे वदत्यथ यत्रैतदस्माच्छरी-रादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्व आक्रमत‡ इति नाडीरश्मि-

---

* भवतीति संशय इति खं ।

† औत्कर्षकथनादिति खं ।

‡ उत्क्रामतीत्यारभ्य आक्रमत इत्यन्तं खपुस्तके नास्ति ।

सम्बन्धेनैका परलोकगतिः श्रूयते। अर्चिरादिका चान्या। ते ऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरित्यादिश्रुत्युक्ता। स एव तन्देवऽ... पन्थानमापद्याग्निलोकमागच्छतीति चापरा। स यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छतीति चेतरा। सूर्य्यद्वारेण ते विरजाः प्रयान्तीति चान्या। एवमनेकेषु मार्गेषु सत्स्वर्चिरादित्वेनैवोक्तिः कुत इति। तत्र सर्व्वेषां पारिभाषिकमर्चिरादित्वमतएवाथैतयोः पथोर्न कतरेण च नेति मार्गद्वयभ्रष्टानामतिकष्टं जायस्व म्रियस्वेति तृतीयं स्थानमित्युक्तं। अन्यथा अनेकेषां मार्गाणामुक्तानां श्रूयमाणत्वादस्य तृतीयत्वं नोच्येत। अतः प्रकरणभेदाद्भिन्नोपासनशेषत्वात्*मिथोऽनपेक्षा। भिन्ना एवैते मार्गा ब्रह्मप्रापका इति मन्तव्यमिति चेत् तत्रोच्यते। न ह्येयं परिभाषा सर्व्वेषु श्रुतास्ति यतस्तथोच्येत। अतो लाघवादनेकपर्व्वविशिष्ट एकएव मार्ग इति मन्तव्यं। ननु पर्व्वभेदेन मार्गभेद इति। गौरवप्रसङ्गात्। न चैवमथैतैरेव रश्मिभिरित्यवधारणानुपपत्तिरिति वाच्यं। तस्याः श्रुतेरुत्क्रमणमात्रमार्गनिरूपकत्वात्। तथाहि। तत्रोपक्रमे ह्यथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्द्ध्व आक्रमत इत्युच्यते। एतस्मात् पुरस्तादथ या एता हृदयस्य नाड्य इत्युपक्रम्य पिङ्गलस्यादित्यस्युक्त्वा तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चामुञ्चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमञ्चामुञ्चामुष्मादादित्यात् प्रतायन्ते ता आसु नाड़ीषु सृप्ता आभ्यो नाड़ीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ता इत्यन्तेन वाक्येन नाड़ीषु

---

* भिन्नोपासनशेषत्वादिति ख ।

रश्मिप्रचारसुक्ताऽग्रेऽथ यत्रैतदस्मादित्याद्युक्तं। उपसंहारे च शतं चैका हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्तीति। एवमुपक्रमोपसंहाराभ्यामुत्क्रमणमात्रमार्गनिरूपकत्वं न तु ब्रह्मप्रापकमार्गस्य। अतस्तदनुपपत्तिपरिहारोऽनर्थकः। नन्वनेकपर्व्वविशिष्टत्वेन मार्गस्यैकत्वे तं निरूपयन्ती श्रुतिः क्वचित् किञ्चित्पर्व्व निरूपयति क्वचिन्नेति कथं उपसंहारेण प्राप्स्यन्त इति तात्पर्य्येण तथेति चेद्ब्रवीषि तदा शाखान्तरमविदुषस्तदसम्भवेन तं प्रति श्रुतेर्न्यूनतापातः। नहि सर्व्वशाखाविदं प्रत्येव कथनमिति वक्तुमुचितं तस्यासम्भवात्* अतः स्वस्वशाखाज्ञानवन्तं प्रत्येव तथा। अध्ययनविधेरपि तावन्मात्रपरत्वात् शाखान्तरसंवादिपर्व्वकथनानुपपत्तिश्च। उपसंहारेणैव तस्यापि प्राप्तिसम्भवादतो विरुद्धदिक्कानां स्वस्वमार्गेणैकग्रामप्राप्तिवदिहापि भवितुमर्हति। स्वातन्त्र्येण सर्व्वैर्मार्गैर्ब्रह्मप्राप्तिः। नचैवमथैतयोः पथोरिति द्विवचनानुपपत्तिर्जायस्व म्रियस्वेत्यस्य तृतीयत्वञ्चानुपपन्नमिति वाच्यं। अर्चिरादिकमुक्तोपसंहरत्येष देवयानः पन्था इति। श्रुत्यन्तरे च स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छतीति। तथाच ब्रह्मप्रापकाः सर्व्वे मार्गा देवयाना इत्युच्यन्ते। दैवी सम्पद्विमोक्षायेति भगवद्वाक्याद्दैव्यां सम्पदि ये जातास्ते देवा इत्युच्यन्ते। तेषां यानं गमनं यत्रेति ते सर्व्वेऽपि मार्गा देवयानशब्देनोच्यन्ते। द्वितीयस्त्वविशिष्टः। एवं द्वित्वं त्रित्वं चोपपद्यते। नचोक्तरीत्या

* तस्यासम्भावादिति ख'।

लाघवादिक एव स मन्तव्यः। स्वतःप्रमाणभूता हि श्रुतिः। सा येन यदा या श्रुता तदर्थावधारणे द्वितीयस्या अनुपस्थितत्वान्न लाघवगौरवतत्विचारावसरः। क्वचिदुपस्थितौ चोक्तबाधकैरुपसंहारानवकाशः।

अपरञ्च। ब्रह्मविदः क्रममुक्तौ गन्तव्यो मार्गोह्ययमुपदिश्यते। तत्तल्लोके तदानन्दानुभवस्यावश्यकत्वाच्चोपासनभेदात् फलभेदस्यावश्यकत्वात् मार्गभेदोऽपि तथेति सर्वेष्वेकरूपफलप्रसञ्जक उपसंहारो न युक्तः। किञ्च। उपासने कर्म्मणि चोपसंहारः संमतः। मार्गस्तु नान्यतररूपोऽतो यस्योपासकस्य येन मार्गेण गमनं स मार्ग उपदिश्यत इति नोपसंहारो युक्तः। अविधेयत्वादपि तथा। एतद्यथा तथा पुरस्तान्निरूपितमुपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने चेत्यत्र। एवं सत्यर्च्चिःशब्देनार्च्चिरूपलक्षितो मार्ग उच्यते। आदिपदेनान्ये सर्व्वे मार्गाः संगृह्यन्त इति नानुपपत्तिः काचिदिति चेत्। अत्र वदामः। अर्च्चिरादिश्च इत्युक्तं भवेत्त्वद्रीतिरेव चेत् अभिप्रेता भवेत्। तस्मान्नैवमित्यवधार्य्यते*। अर्च्चिरादिनेत्येकवचनान्यथानुपपत्त्या मार्गस्यैकत्वमवश्यमङ्गीकार्य्यमेवं सति श्रुतिषु यावन्ति पर्व्वाण्युक्तानि तानि सर्व्वाण्येकस्मिन्नेवार्च्चिरादिमार्गे वर्त्तमानान्यपि यस्योपासकस्य यावत्पर्व्वभोगोभावी तं प्रति तावत्पर्व्वोक्तिर्यस्य यावतां तेषां स न भावी तं प्रति न तदुक्तिस्तद्भोगाभावादिति नानुपपन्नं किञ्चित्। ननु त्वयाप्यनुक्तानां†

---

* इत्येव धार्य्यते इति ख।

† त्वयाप्युक्तानामिति ख।

पर्व्वणां तत्र स्थितिं वदतोपसंहार एवोक्तो भवति प्रापकत्वेनेति चेत्। स्यादेतदेवं यदि तस्यैव गन्तुर्भोगाय तदपि पर्व्व तत्रोच्येत। न त्वेवं। किन्त्वेकवचनानुरोधान्मार्गैक्ये निश्चिते यं प्रति यत्पर्व्वोच्यते तत् तत्र कण्ठोक्तमेवेति नोपसंहारापेक्षा। अग्रेऽन्यत्रोक्तानां पर्व्वणामनुक्तस्थले सन्निवेशोक्त्यापि सूत्रकाराभिमत एकएव मार्ग इति ज्ञायते। श्रुतौ सर्व्वत्र पूर्व्वपरामर्शादपि तथा।

वायुमब्दादविशेषविशेषाभ्यां ॥ २ ॥

छान्दोग्ये वायुर्न पठ्यते। कौषीतकिश्रुतौ तु स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमिति वाय्वादयः श्रूयन्ते। तत्रार्चिषोऽग्नेश्चाभेदान्न विचारणीयमस्ति। वायुलोकं कस्माल्लोकात् गच्छतीत्याकाङ्क्षायामाह। वायुमब्दादिति। अर्चिषोऽहरह्न आपूर्य्यमाणपक्षमापूर्य्यमाणपक्षाद्यान् षड् उदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं सवत्सरादादित्यमित्यत्र संवत्सरात्कालात्* परस्ताद्वायुलोको निवेशयितव्यस्तथाच संवत्सरलोकात् वायुलोकं गच्छतीत्यर्थः। तत्र विनिगमकमाहाविशेषविशेषाभ्यामिति। अत्रेदं ज्ञेयं। अग्निहोत्रादिकर्मभिश्चित्तशुद्धावुपासनाभिर्ज्ञानोदये क्रममुक्त्यधिकारी हि तत्तल्लोकं गत्वा मुक्तान्ते ब्रह्म प्राप्नोति। कर्म्म त्वग्निसाध्यं भूलोकएव च भवत्यत आदौ तत्रत्योभोगस्ततस्तदुपरितनलोकानां। पृथिवी दीक्षा तयाऽग्निर्दीक्षया दीक्षितः। यथा पृथिव्यग्निगर्भेत्यादि

* सम्वत्सरलोकादिति ख।

श्रुतिभ्यो भूरग्निप्रधाना भवत्यतोऽर्च्चिराख्यं अग्निलोकमादौ गच्छति । ततः कर्म्मोपासनयोरहरादिसंवत्सरान्ते काले विहितत्वात् तत्र तत्र* गत्वा भुंक्ते। तथाच संवत्सरान्तानां भूसम्बन्धित्वेनाविशेषात् तन्मध्ये वायोर्न प्रवेशः। भूलोकादुपर्य्यन्तरिक्षलोकस्तदुपरि द्युलोकस्तथाच वायुरन्तरिक्षस्याधिपतिरितिश्रुतेः सूर्य्योदिवोऽधिपतिरिति श्रुतेस्तयोः पौर्वापर्य्यं विशेषो हेतुरस्तीत्यादित्यलोकात् पूर्व्वमुक्तरीत्या भूलोकमध्यपाति संवत्सरस्य परस्ताच्च वायुर्निवेशयितव्य इत्यर्थः। ननु तेऽर्च्चिषमभिसम्भवन्त्यर्च्चिषोऽहरित्यादिश्रुतिरुक्तमुक्तमनूद्यानूद्यापादानत्वं वदन्ती पूर्व्वोत्तरयोरव्यवधानं सूचयतीति नोक्तमादरणीयमिति चेत्। सत्यं। यस्योपासकस्य न वायुलोक†भोगस्तं प्रति सोक्तिः यस्य तु तद्भोगस्तस्योक्तरीतिर्मार्गैक्यादिति नानुपपत्तिः काचित्। केचित्तु स एतं‡ देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकमित्यविशेषेण वायुरुपदिश्यते मिथः पौर्व्वापर्य्यप्रापकपदाभावात्। यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्द्ध्व आक्रमते स आदित्यमागच्छतीति श्रुत्या आदित्यात् पूर्व्वो वायुर्विशेषेणोपदिश्यत इत्यब्दादित्ययोरन्तराले निवेशयितव्य इत्यर्थं वदन्ति। स चिन्त्यते। यथा तेन स ऊर्द्ध्व आक्रमते स आदित्यमागच्छतीति विशेषोपदेश इत्युच्यते तथा

---

* तत्र लोके गत्वा इति ख।

† वायुलोक इति ख।

‡ स एनमिति ख।

स वरुणलोकमित्यत्रापि वक्तुं शक्यं । न च स आदित्यमागच्छतीत्यत्र तच्छब्दस्य पूर्व्वपरामर्शित्वात् वायुलोकगतस्यैव पूर्व्वत्वात् तथेति वाच्यं । अग्निलोकमागच्छति स वायुलोकं स वरुणलोकमित्यत्रापि तुल्यत्वात् । किञ्चैवं अग्निलोकानन्तरं वायुलोक इत्यपि वक्तुं शक्यमतो विद्वद्भिरुपेक्ष्योऽयं । वाजसनेयिनस्तु मासेभ्यो देवलोकं देवलोकादादित्यमिति पठन्ति । तत्राप्यादित्यात् पूर्व्वो देवलोकात्परो वायुर्ज्ञेयः । एकत्रादित्यात् पूर्व्वत्वे सिद्धे मार्गैक्यादन्यत्रापि तथात्वस्य न्यायप्राप्तत्वात् । सूत्रकारेण तु छन्दोगश्रुत्यपेक्षयोक्तं वायुशब्दादिति । एवं सति मासेभ्यः परस्तादब्दनिवेशनं कार्य्यं । न च वायुशब्दादिति सूत्रान्मार्गभेदापत्तिः । देवलोकस्यादित्याधिष्ठेयत्वेनादित्यमध्यपातित्वमभिप्रेत्य छन्दोगश्रुतिस्तथोक्तवती । तदनुसारेण व्यासोऽप्यतो नानुपपत्तिः ।

## तडितोऽधि वरुणः सम्बन्धात् ॥ ३ ॥

आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतमित्यत्र पठितविद्युल्लोकात् परतो वरुणलोको निवेशनीयः । तत्र हेतुः सम्बन्धात् । तडितोऽप्सम्बन्धित्वाद्वरुणस्य तत्पतित्वात् तथा ।

## वरुणाच्चाधीन्द्रप्रजापती ॥ ४ ॥

स्पष्टमिदं । अर्च्चिरादिपाठे विद्युदनन्तरं तत्पुरुषो मानवः स एतान् ब्रह्म गमयतीति पठ्यते । तत्तु* यस्योपासकस्य वरुणादिलोकगमनापेक्षा† नास्ति तमपेक्ष्येति ज्ञेयं । मार्गैक्य-

---

* तत्रेति ख' ।

† गमनोपेक्षा इति ख' ।

नियममभिप्रेत्य सूत्रकारोऽन्यत्रोक्तानामन्येषामपि लोकानां तत्रैव निवेशनमाह ।

आतिवाहिकास्तल्लिङ्गात् ॥ ५ ॥

विद्युदनन्तरं* तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयतीत्यत्र भवति संशयः । उक्तश्रुतेर्गमयित्रैव ब्रह्मप्राप्तिरिति निश्चीयते । स च विद्युदनन्तरमेव पठ्यते । एवं सति यस्य वरुणादिलोकगमनं तस्य वचनाभावेन गमयितृप्राप्तेर्ब्रह्मप्राप्तिर्भवति नवेति । तत्र वाचनिकस्य यावद्वचनत्वात् तदभावेन सा न भवतीति प्राप्त आह । आतिवाहिका इति । एतदुक्तं भवति । यस्योपासकस्य यावत् फलभोगानन्तरं ब्रह्मप्राप्तिर्भाविनी तस्य तावत् तद्भोगानन्तरं ब्रह्मप्राप्तिर्भवत्यत एव कौषीतकिश्रुतौ प्रजापतिलोकानन्तरं ब्रह्मलोकः पठ्यते । अन्यथा कृतसाधनवैयर्थ्यन्तेषां ब्रह्मप्राप्तिसाधनत्वबोधकश्रुतिविरोधश्च स्यात् । तथाच यत्रातिवाहिकश्रुतिर्नास्ति तत्राप्यातिवाहिको भगवदीयएव ब्रह्म प्रापयतीति ज्ञेयं । वस्तुतस्तु बहवएव तादृशाः सन्तीति ज्ञापनाय बहुवचनमत्रोक्तं । तन्मध्ये कश्चनागत्यैकएव नयतीति ज्ञापनाय श्रुतावेकवचनं । तत्र हेतुस्तल्लिङ्गात् । तत्पुरुषोऽमानव इत्यत्र ब्रह्मसम्बन्धित्वं लिङ्गमुच्यते । तेनेदं ज्ञाप्यते यथा विद्यावलात् तत्तल्लोकप्राप्तिस्तथैव ब्रह्मप्राप्तिरपीति न । किन्तु भगवदीयपुरुषानुग्रहेणैवेति । न च पूर्व्वपूर्व्वलोकाधिष्ठातृदेवा उत्तरोत्तरलोकं प्रत्यातिवाहिका यथा तथा ब्रह्मप्राप्त्यव्यवहितपूर्व्वलोकदेवाएव ब्रह्मप्रापका इति तत्पदेन

* स तत्पुरुष इति ख ।

स लोक एवोच्यत इति वाच्यं । तदेतरलोकेषु तदकथनं यथा तथाचापि न कथयेत् । लोकाधिष्ठातृदेवानामातिवाहिकत्वो- क्तावर्च्चिर्लोकप्रापकातिवाहिकस्याभावात् तत्प्राप्तिर्न स्यात् । तथा सति देवयानमार्गएवोच्छिद्येत । अतो यथा विद्याबले- नैवार्च्चिषः प्राप्तिस्तथेतरेषामपीति बुध्यस्व । कस्यचिदल्पलोक- गत्यनन्तरमेव ब्रह्मप्राप्तिः कस्यचिद्बहुलोकगत्यनन्तरं सोच्यत इति भोगभूमित्वमेव तेषामवगन्तव्यं । सर्व्वेषां सर्व्वत्र गमने देवयानं पन्थानं वदन्त्याः* श्रुतेः सामितत्कथनमनुपपन्नं स्यात् । अत उपासनाभेदेन फलभेदं ज्ञापयन्ती तथा वदतीति युक्त- मुत्पश्यामः । ननु तेषामिह न पुनरावृत्तिरस्तीत्यादिश्रुतिभ्यो देवयानं पन्थानं प्राप्तानां पुंसां ब्रह्मवित्त्वमवश्यं वाच्यं । तेन सद्योमुक्तौ सम्भवत्यां† सत्यां क्षयिष्णुत्वेन क्षुद्रानन्दत्वेन च हेयानां परमफलप्राप्तिविलम्बहेतूनामर्च्चिरादिलोकानां कामना कुतो यतस्तद्धेतुभूतोपासनाः सम्भवन्ति । किञ्च । अर्च्चिरादिना तत्प्रथितेरित्यत्र यदुक्तं ज्ञानमार्गीयस्यैवार्च्चिरादिप्राप्तिर्न भक्ति- मार्गीयस्येति तदप्यनुपपन्नं । यत् कर्म्मभिर्यत् तपसा ज्ञान- वैराग्यतश्च यदित्युपक्रम्य

सर्व्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छति ॥

इति भगवद्वाक्याद्भक्तस्याप्येतद्वाञ्छाफले सम्भवतोऽन्यथा प्रभुर्न वदेत् । एवं सति भक्तिसुखं हित्वा अन्यच कामनायां हेतुर्वाच्य इत्याकाङ्क्षायान्तमाह ।

---

* वदन्त्यामिति ख ।

† सम्भवन्त्यामिति ख ।

उभयव्यामोहात् तत्सिद्धेः ॥ ६ ॥

अत्रेदं ज्ञेयं। देवयानः पन्था अपि भगवतैव सृष्टोऽस्ति। तथाचोक्तहेतुभिः*स्तत्र कस्यापि कामाभावे तत्सृष्टिर्व्यर्था स्यादितो भगवानेव कांश्च व्यामोहयति ज्ञानिनः‡ मर्य्यादामार्गीयभक्तांऽस्यातस्तत्कामनासिद्धेस्तत्फलभोग इति। यत्त्वर्च्चिरादेर्मार्गगन्तॄणां देहवियोगेन संपिण्डितकरणग्रामत्वेनास्वातन्त्र्यं व्यामोहः। अर्च्चिरादीनां चाचेतनत्वेनास्वातन्त्र्यं व्यामोहः कार्य्यकरणासामर्थ्यमिति यावत्। तेनार्च्चिराद्यधिष्ठातृदेवैरतिवाह्यन्त इति सिद्धमिति व्याख्यानं। तन्न साधीयः। व्यामोहशब्दस्यान्यथाज्ञानवाचकत्वेनासामर्थ्यावाचकत्वात्। तथा सत्यर्च्चिर्लोकमपि न प्राप्नुयात् प्रापकाभावादित्युक्तं। ननु विद्युतो वरुणादिलोकप्राप्त्यनन्तरं यस्य ब्रह्मप्राप्तिस्तस्य तल्लोकसम्बन्धी ब्रह्मप्रापकः पुरुषोऽस्त्यत सः स्वतएव तत्प्राप्नोतीति संशय उत्तरं पठति।

वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ७ ॥

न हि ब्रह्मप्राप्तिर्विद्युल्लोकसम्बन्धिपुरुषसामर्थ्येनोच्यते किन्तु ब्रह्मसम्बन्धितत्सामर्थ्येन। तथाच यतएव लोकात् तत्प्राप्तिस्ततो ब्रह्मसम्बन्धिपुरुषादेव। एवं सति विद्युल्लोकात् तत्प्राप्तौ यो ब्रह्मसम्बन्धी पुरुषः प्रापक उक्तस्तेनैव ततो वरुणादिलोकेभ्योऽपि ब्रह्मप्राप्तिः। तत्र हेतुमाह। तत्श्रुतेः। तान्वैद्युतात्

* तथाचोक्तो हेतुभिरिति खं।

† तत्तत्सृष्टिरिति खं।

‡ ज्ञानिनां इति खं।

§ भक्ता इति खं।

